प्रधानदेवता तत्र साक्षात् मृत्युः प्रकीर्त्तितः ।
उग्रोधिदेवता प्रोक्ता जयः प्रत्यधिदेवता ॥
विष्णवागारे शिवागारे नदीतीरेऽथवा पुनः ।
गोष्ठे वा वह्न्यागारे वा स्वोत्पत्तिग्राम एव वा ॥
... ... ... ...
स्थण्डिलं परिकल्प्याथ गोमयैरनुलिप्य च ।
रङ्गवल्याद्यलंकृत्य पुण्याहं नान्दीपूर्व्वकम् ॥
व्रीहिभारं विनिक्षिप्य तदर्द्धं तण्डुलं तथा ।
तदर्द्धं तिलमास्तीर्य्य अष्टपत्राम्बुजं लिखेत् ॥
विलिख्य तत्र ह्रींकारं निक्षिपेत् कलशान् ततः ॥

*First Colophon* :—

Leaf 4A, इति श्रीशैवागमे शिवषण्मुखसंवादे उग्ररथशान्तिकल्पः समाप्तः ।

शैवागमानुसारेण प्रयोगोऽत्र विधीयते ।
सर्व्वलोकहितार्थाय सुलभः कथ्यते क्रमः ॥

Leaf 6A, Ichonography of "Death" मृत्यु.

"यमदण्डोज्ज्वलकरं महिषोपरिसंस्थितं ।
सर्वभीतिकरं ध्यायेत् मृत्युं जगदधीश्वरम् ॥
पाशखड्गाङ्कुशगदाभासमानकराम्बुजं ।
गीर्व्वाणगणवन्द्याङ्घ्रिं मृत्युं महिषवाहनम् ॥"

Ichonography of "Ugraratha."

"करालास्यं विरूपाक्षं उग्रं व्याघ्रवरे स्थितम् ।
शूलं चाङ्कुशं पाण्योर्बिभ्राणं हृदि भावयेत् ॥"

*It ends* :—

य एतामाचरेदुग्ररथशान्तिं षडानन ।
शाश्वतोऽस्य विनश्यन्ति सर्व्वदा सुखमेधते ॥

*Second Colophon* :—

इति श्रीशैवागमे शिवषण्मुखसंवादे उग्ररथशान्तिकल्पप्रयोगश्च समाप्तः ।

Ugraratha is a terrible deity—a companion of the God of Death. He should be propitiated in the 60th year of a man's life.

See L. 3233.

## 2575.

### 2231. षष्टिपूर्त्तिशान्तिः । *Ṣaṣṭipūrtiśāntiḥ.*

*Attributed to Śaunaka and its Prayoga.*

Substance, country-made paper. 11¼ × 5¼ inches. Folia, 7. Lines, 11 on a page. Extent in Ślokas, 160. Character, Nāgara. Date, Śaka 1749. Appearance, pasted and discoloured.

A propitiatory ceremony on completing the 60th year of one's life.

The Śānti begins :

अथ षष्टिपूर्त्तिशान्तिः ।

विधानमधुना तस्य वदाम्यागमदर्शनात् ।
सन्निधौ विष्णुदेवस्य वत्सरे षष्टिसंज्ञके ॥
षष्ठ्यादिदेवतापूजां होमादीन् कारयेच्छुभः ।
आयुर्विवर्द्धते पश्चान्मार्कण्डेयमहामुनिम् ॥

It contains 53 verses.

*Col. in leaf 3A :*

इति शौनकोक्त-षष्टिपूर्त्तिशान्तिः ।

These two Santis were performed by Maharaja Sir Candra Samser Jhang, Mahārājā of Nepal, in 1922 and 1923 A.D.

Then begins the Prayoga :—

3A. अथ शौनकोक्त-षष्टिपूर्त्तिशान्तिप्रयोगः ।

शुभे देशे विष्णुसन्निधौ देशकालौ संकीर्त्य अमुकगोत्रोत्पन्नस्या-
मुकशर्म्मणः मम दीर्घायुरारोग्यपुत्रपौत्राद्यनवच्छिन्नसन्ततिश्रियः-
लक्ष्मीप्राप्त्यादिसकलेष्टसिद्धिद्वारा श्रीप० ये षष्ट्यब्देऽतीते जन्म-

मासे जन्मनक्षत्रे कर्त्तव्यतयाविहितं शौनकोक्तं षष्टिपूर्त्तिशान्त्याख्यं कर्म्म करिष्ये ।

*The Post Col. Statement* :—

शके १७४८ व्ययनामसंवत्सरे आषाढ़ शुद्ध चतुर्थी रविवासरे तद्दिनी देवोपनामक रामचन्द्रसूनुपरशुरामेण लिखितं । शुभं भवतु ।

*In a different hand* ·

इदं पुस्तकं नारायणदीक्षितभागवतस्य ।

## 2576.

### 1193. अद्भुतसागरः । *Adbhutasāgaraḥ.*

*By Vallāla Sena, King of Bengal in the 12th Century A.D.*

Substance, country-made paper. 10 × 4½ inches. Folia, 167. Lines, 10 on a page. Extent in Ślokas, 4,200. Character, Nāgara Appearance, tolerable. Complete.

A book of omens, left unfinished by the author and completed by his son, Lakṣmaṇa Sena. The Paṇḍita who helped the royal authors in the compilation appears to be Śrīnivāsa.

1B. युक्तायुक्तवि[वे]च(र)न-प्रणयिनं शौत्यावसौतांवतौं (?)
वंशोत्संममशा(यं)रत्नमनघ[घ्यं] श्रीश्रीनिवासं व्यधात् ॥
ज्योतिर्विदां च वचनानि विचार्य्य तेषां
तात्पर्य्यपर्य्यवसितौ ग्रथनानुपूर्व्वाम् ।
विप्रप्रसादगुरुपञ्जनतस्तु तद्वत्
निःशङ्कशङ्कररूपः कुरुते प्रयत्नम् ॥
श्रीमल्लक्ष्मणसेनभूपतिवरः श्लाघ्यो यदुद्योगतो ।
(निःप)नि[ष्प]न्नोऽद्भुतसागर[ः]।:] कृतिरतो वल्लालभूमिभुजः ॥

See Bik. 289, I.O Catal 3104, and Bhandarkar's report on the search of Sanskrit manuscripts during the years 1887 to 1891.

## 2577.

10052. *The Same.*

Substance, country-made paper. 11 × 5 inches. Folia, 2 to 29. Lines, 11 to 13 on a page. Character, Nāgara of the eighteenth century. Appearance, old and discoloured. A fragment.

2B. शाकेनवाधुक्रथेन्दु श्वाःभेद्भुतसागरम् (?)
गौड़ेन्द्रकुञ्जराणां निशङ्कतिर्ग्गिष्यत्व मम्यागतः ॥ (?)
नानादानतिलाम्बुपुम्बलनभः सूर्य्यात्मसंगमं ।
गंगावारियं सदा निजवपुः कुर्व्वाश्च तन्योगतः ॥
श्रीमल्लक्ष्मणसेन भूपतिरतिश्लाघ्यो(यद्यौगतो)[यद्‌द्योगतः] ।
निष्पन्नोद्भुतसागरः कृतिरसौ वल्लाल भूमिप(तिः)[तेः] ॥
ख्यातः केवलमल्लवः समरजस्तोमस्य तत्परगाः ।
प्रावीण्येन भगीरथस्तु भुवने ह्यद्यापि विद्योतते ॥

14A. महाराजाधिराज--निः[शङ्क]शङ्कर--श्रीमद्बल्ला(न)[ल]सेन--देव-विरचिते श्रीअद्भुतसागरे सूर्य्याद्भुतावर्त्तः । अथ चन्द्राद्भुतावर्त्तः ।

24B. ०चन्द्राद्भुतावर्त्तः । अथ राहोरद्भुतावर्त्तः ।

## 2578.

3960. **अद्भुतसागरसारः ।** *Adbhutasāgarasārah.*

*By Paṇḍitarāja Śrīpati.*

Substance, country-made paper. 15 × 3½ inches. Folia, 97. Lines, 7 on a page. Extent in ślokas, 1,650. Character, Bengali. Date, Śaka 1734. Appearance, fresh. Complete.

*Colophon* :—

इति पण्डितराजश्रीपतिनिर्म्मिताद्भुतसागरसारः समाप्तः ।

*Post Colophon* :—

श्रीसीतारामाभ्यां नमः ।

शकाब्दाः १७३४ । पुस्तकमिदं श्रीकृष्णरामदेवशर्म्मालिखितं च श्रीपीताम्बरदेवशर्म्मणः । ॐ नमो गुरवे ।

*It begins thus :*

ॐ नमो गणेशाय ।

जगत्त्रयस्योपचयाय जायतां वलिद्विषो वामनवेशविभ्रमः ।

सुदूरमभ्युत्पतितं जवेन तोयानिकुसुमकमिव प्रतीयते ॥ (?)

इष्टानिष्टज्ञाने वाञ्छा यदि विद्यते महती ।

अद्भुतसागर[सारं] (सागरं) श्रीपतिरचितं (चरितं) बुधाः शृणुत ॥

अथाद्भुतनिरूपणम् ।

तत्र वृद्धगर्गः ।, etc., etc.

A compilation on omens and portents, their evil effects and means of averting them. The omens and portents are of three kinds :—

प्रकृतेरन्यथोत्पातः संक्षेपस्तावदीदृशः ।

त्रिविधः स तु विज्ञेयो दिव्यनाभसभूमिजः ॥

The authorities consulted :—

1B, वृद्धगर्गः, गर्गः, मत्स्यपुराणम् : 3B, पराशरः : 4A, वराहसंहिता ; 5A, मयूरचित्रे, आग्नेयपुराणे : 7A, गर्गभार्गवीये, 11A, विष्णुधर्म्मोत्तरः ; 15A, नारदः ; 37A, बार्हस्पत्ये : 43B, औशनसः ; 44A, वृद्धगर्गः ; 47B, भार्गवीये ; 48B, काश्यपः, 49B, शोणपर्व्व ; 50A, वराहः ; 68A, सारावल्यां ; 68B, कारावल्याम् ; 69A, आदिपुराणम्, मार्कण्डेयपुराणम् and लिङ्गपुराणम् ; 69B, चरके ; 72B, कालावल्याम् ; 73B, सुश्रुतः ; 77B, देवलः ; 79B, भीष्मपर्व्व ; 81A, शालिहोत्रे ; 86A, अरण्यकाण्डे ।

*It ends thus :—*

अवारिदेशे सर्पाखुविडालमत्स्याः

न खजाति-मांसान्युपभुञ्जते वा । (?)

व्रजन्ति वामे युग मध्यजाद्याः (?)

विहङ्गमा मृगाश्च प्रतिस्थाश्च सविचा-मिथोश्च जनाशयानाम् ॥ (?)

## 2579.

3556. अद्भुतदर्पणः । *Adbhutadarpaṇaḥ.*

*A work on omens and portents and their evil effects.*

*By Mādhava Sarma.*

For the MS. and the work see H.P.R. Vol. I, 3 and for the work I.O. Catal. No. 3105.

In continuation of the postcolophon in thick letters :—

म्रत्युञ्जयदेवशर्म्मणः स्वाक्षरमिदं पुस्तकम् ।

At the beginning of the MS. in a later hand :—

अयगोपालदेवशर्म्मणः पुस्तकमिदम् ।

The MS. contains also at the beginning a table of contents of the work.

## 2580.

134. अद्भुतसारसंग्रहः । *Adbhutasārasaṃgrahaḥ.*

*By Naradrīpa, a scion of the Nityānanda family.*

The manuscript has been noticed by Dr. Rājendralāla Mittra under No. 465 in Vol. I. of his Notices.

Adbhuta Sāra by Mahadeva Sarma is a treatise on omens of approaching evils, Adbhuta meaning extraordinary phenomena in nature celestial, atmospheric and terrestrial (दिव्यनाभस and भूमिज). This is an abstract of Mādhava's work.

## 2581.

1972. विधानमाला सटीका ।

*Vidhānamālā with a commentary.*

For the MS. and the work see L. 3241.

*Post Colophon* :--

इति श्रीनृसिं[ह]भट-विरचितः विधानमालाख्यग्रन्थ-संपूर्णमस्तु ॥ कृष्णार्पणमस्तु ॥ शके १७६५ आनन्दनाम संवत्सरे आषाढ-वद्य ११ इन्दुवारे संपूर्णम् ।

A treatise on purificatory rites.

I.O. Catal. Nos. 1769 and 1770 describe Vidhānamālā, which is a large work extending over 477 leaves, and its commentary probably by Viśvanātha, son of Hari. The present manuscript contains a fragment of the commentary with a fragment of the text.

It is not only a work on Smṛti, as it professes to be, but also embraces various other subjects such as, medicine, military affairs, veterinary arts and so on.

The author's home :—

१५६A. वैराटे विषयेऽस्ति चन्दनगिरे र्गव्यूतिमात्रे परं
देव्याः प्राक् सुमनोहर[ं](ा) वसुमतीतीरेऽग्रहारो महान् ।
तत्र ज्योतिकुलोद्भवो गुणनिधिः श्रीमान् नृसिंहो द्विजः
सक्रे शास्त्रमिदं नृणामुपकृतिं संधाय चित्ते निजे ॥

The I.O. MS. referred to above is dated Samvat 1732 (= A.D. 1676).

## 2582.

## 2074. मारीभयशान्तिविधानम् ।

*Marībhayaśāntividhānam.*

Substance, country-made paper. 8 × 3½ inches. Folia, 3. Lines, 9 on a page. Extent in ślokas, 50. Character, Nāgara. Appearance, fresh. Fragment

*It begins* :--

अथातो देशनगरग्राममहाव्याधिशान्तिविधानं कथ्यते ।

Two methods are given, one from the Karmavipākas, the other from Brahmavaivarta and Brahmāṇḍapurāṇam.

*Colophon* :—

In leaf 2A, इति श्रीनृसिंहभट्टविरचितायां विधानमालायां ब्रह्माण्ड-पुराणोक्तं देशनगरसामान्यग्रामोद्भव-जनपीडाप्रशमनविधानम्। Then commences, अथ जनमारविधानम् ॥

## 2583.

2264. **जनमारशान्तिः।** *Janamāraśāntiḥ.*

*From Vidhānamālā according to Garga.*

For the MS and the work see L 1088.

*Post Col.* :—

यादृशं पुस्तकं दृष्ट्वा, etc., इदं स्वरे उपनामक भाऊशर्मणा लिखितं स्वार्थं परार्थंश्च।

## 2584.

5994. **देवीगृहीतबालकरक्षणम्।**

*Devīgṛhītabālakarakṣaṇam*

*Being an extract from Santi Mayūkha*

Substance, country made paper 11 × 5 inches. Folia, 8. Lines, 8 on a page. Character, Nāgara of the nineteenth century. Date, Samvat 1924. Appearance, fresh. Complete.

It relates to the rites for the protection of children from the evil spirit.

*Beginning* :—

श्रीगणेशाय नमः।

अथ पूतनाविधानानि

मदनरत्नप्रयोगसारे।

प्रथमेऽहनि गृह्णाति बालकं बालिग्रहौ।

पापिनी ग्रहौति पाठः। नन्दिनीति पुराणान्तरे।

तया गृहीतमात्रस्य चेष्टितान्युपलक्षयेत्।

*Colophon* :—

इति शान्तिमयूखे देवीप्रतिष्ठाबालकरत्नगाम् ।

*Post Colophon Statement* :—

संवत् १९२४ ज्येष्ठ शुक्लाष्टम्यां रवौ लिखितं विश्वनाथद्विवेदिना ।

## 2585.

2945. शान्तिसारः । *Sāntisārah.*

*By Dinakara Bhaṭṭa.*

Substance, country-made paper. 10½ × 5 inches. Folia, 152. Lines, 13 on a page. Extent in ślokas, 4,560. Character, Nāgara. Date, Saka 1573=1651 A.D. Appearance, discoloured. Complete

For a description of the work see I.O. Catal. No. 1754. The 27 verses at the beginning of the work giving the contents of the work are not in the present MS.

*Colophon* :—

इति श्रीमद्रामेश्वरसूरिसूनु-श्रीमन्नारायणसुत-श्रीमद्रामकृष्ण-भट्टात्मजदिनकरभट्टकृतः शान्तिसारः समाप्तः । ग्रन्थगणना ४००० ।

The importance of the MS. lies in its age to which the author himself belongs.

शाके १५७३ विरोधकृन्नामसंवत्सरे आश्विन्यां कृष्णैकादश्यामिदं पुस्तकं सम्पूर्णम् ॥ शुभं भवतु ॥ इदं पुस्तकं दशाचयनी कपर्दिकेन लिखितम् स्वार्थं परोपकारार्थं च ।

Then five lines more in a much later, scribbling hand.

## 2586.

2190. *The Same.*

Substance, country-made paper. 11¼ × 5 inches. Folia, 178. Lines, 10 on a page. Extent in ślokas, 4,700. Character, Nāgara. Appearance, discoloured. Correct.

A compendium of rites for the pacification of planets by Dinakara Bhaṭṭa.

*Col.* :—

इति श्रीदिनकरभट्टकृतायां शान्तिसार संपूर्णं समाप्तः ॥

By comparison with the description of the I.O. MS. it appears to be incomplete.

## 2587.

2397. ज्वरशान्तिः । *Jvaraśāntiḥ.*

*From Śāntisāra.*

For the manuscript see L. 4115.

*The Post Col.* :—

लिखते इत्युपाध्याय-परशुरामेण लिखितम् ।

## 2588.

6472.

B. Substance, etc., the same as in A and B Folia, 26. Lines, 10 on a page. Extent in ślokas, 450. Character, Nāgara. Appearance, fresh. Complete.

*Beginning* :—

अथ शान्तिसारप्रयोगमवलोक्य संक्षेपेण रचित-नक्षत्रादि-शान्तिविधिर्वक्ष्यते ।

## 2589.

6482. शान्तिसर्वस्वम् । *Śāntisarvasvam.*

*By Śivanārāyaṇa.*

Substance, country-made paper. 10½ × 5 inches. Folia, 31 Lines, 10 on a page. Extent in ślokas, 750. Character, modern Nāgara. Appearance, fresh. Complete.

*Colophon* :—

इति मालवीयहनुमानात्मजशिवनारायणकृते शान्तिसर्व्वस्वे काकमैथुनदर्शनादि-शान्तिप्रयोगः समाप्तः ।

समाप्तोयं शान्तिसर्व्वस्वं ।

The name of the last owner of the MS. on the cover :—

मालवीयोपनामक कर्म्मकाण्डी वर्षो पंडितस्येदं पुस्तकम् ।

*Beginning* :-

अथ गोमुखप्रसवशान्तिप्रयोगः ।

अथ यथाकाले सम्भृतसम्भारः कृताभ्यङ्गो यजमानः सपत्नीकः सबालः पीठोपविष्टः प्राणानायम्य देशकालौ संकीर्त्य गोत्रः शर्म्मा मम अस्य बालकस्य अमुकनक्षत्रोत्पन्नस्य तन्नक्षत्रजननसूचित-पित्रादिसर्व्वारिष्टनिरसनद्वारा दीर्घायुरादार्थं श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवशान्तिमहं करिष्ये ।, etc., etc.

A work of the same title is quoted in Nirṇaya Sindhu, Śāntisāra, and Saṃskāra-Kaustubha.

## 2590.

### 1888. महामारीशान्तिः । *Mahāmārīśāntiḥ*

Substance, country-made paper. 9 × 4½ inches. Folia, 12. Lines, 9 on a page. Extent in ślokas, 200. Character, Nāgara. Complete.

*It begins* :

अथ जनमारोत्पत्तिनिदानभूतानि नाना]विधानि मूलवाक्येषु दृश्यन्ते तेषु कानिचित् ज्ञानगम्यानि कानिचित् अगम्यानि इत्येवं तेषां सर्व्वेषां संकृतानामेव तन्निदानत्वमित्यपि वक्तुं न शक्यते । रोगनिदानकर्म्मणामिव अज्ञातमस्यापि तन्निदानत्वं वक्तुं शक्यं तत्र तेषां मध्ये इदमेव निदानं इत्यपि निश्चेतुमशक्यत्वात् सर्व्वेषां संकल्प-वाक्ये कीर्त्तने बाधकाभावात् तथा संकल्पवाक्यस्य अयं संग्रहः—

यथाः—देशकालौ संकीर्त्त्य प्रभुसहितसर्व्वजनकर्त्तृकाकार्य्यकरणा-
दगुरुदण्डपातनापूज्यपूजनमान्यावमाननामद्युत्कर्त्तृकगोस्तन्यपानगो-
हननस्ववृत्त्यपरित्यागविपरीतमैथुनप्रवृत्ति-ब्राह्मणादिकस्वमर्य्यादापरि-
त्यागपूर्व्वक-स्वकर्म्माननुष्ठानराजादिकर्त्तृक-प्रजापीडनादिनिदानक-
रुद्रकोपप्रवृत्तजनमारमहामार्य्यादिपीडातः अस्य राजधान्यवासिनो
ब्राह्मणादिसकलजातिविशिष्टजनस्य सद्योविमुक्तिपूर्व्वकायुरारोग्यै-
श्वर्य्यसकलप्राप्तिसर्व्वापन्निवृत्तिरूपश्रीशाम्भवादिदेवताप्रसादसिद्धये
सति सम्भवे अयुतहोमात्मक--ग्रहयज्ञ--लक्षहोम--जपलघुरुद्र--
श्रीमार्कण्डेयपुराणान्तर्गतसप्तशतिकास्तोत्र नवावृत्तिजपायुतसंख्या-
मृत्युञ्जयजपसहितां गर्गोक्तां शान्तिं करिष्ये।

तदङ्ग स्वस्ति पु० मातृ० नान्दीश्रा० आचार्य्यादिवरणं करिष्ये।

*Col.* :—

इति जनमारशान्तिः।

*Later Authorities Consulted* :

(1) कमलाकरः; (2) शान्तिसारः; (3) हेमाद्रिः; (4) नानार्थ-रत्नमाला।

*Post Col.* :—

सर्व्वात्मा सीतारामेण लिखितं नन्दराम नामा अस्ति।

## 2591.

106. **शान्तिकल्पदीपिका।** *Śāntikalpadīpikā.*

The present manuscript has been noticed by Dr. Rājendralāla Mittra under No. 904

*Post Colophon Statement* :

शाके १७१४ मार्गशीर्ष कृष्णप्रतिपदा इदं पुस्तकं ज्योतिर्विद्रूप-
नाम्ना गोविन्दसुतजनार्द्दनेन लिखितम।

## 2592.

9349. **विनायकशान्तिः ।** *Vinayākaśāntiḥ.*

Substance, country-made paper. 8½ × 4 inches. Folia, 4. Lines, 13 on a page. Extent in ślokas, 104 Date, Saṃvat 1877. Character, Nāgara. Complete.

It is a chapter of शान्तिरत्न by Kamalākara Bhaṭṭa, treating of a rite to be performed for propitiating Gaṇeśa.

*Colophon* :—

इति कमलाकरभट्टकृते शान्तिरत्ने विनायकशान्तिः ।

*Beginning* :—

श्रीगणेशाय नमः ।

नारायणात्मजश्रीमत्रामकृष्णस्य सूनुना ।

कमलाकरभट्टेन प्रोच्यन्ते शान्तयः क्रमात ॥

तत्रादौ विनायकशान्तिप्रयोगः ।

*Post Colophon* :—

संवत् १८७७ आषाढ़ वदी १ । समाप्तः ।

शुभं भवतु लखितं ग. शुक्ल० मणिश्वरवी ।

The introductory couplet appears to have been composed by somebody else, most probably by the priest who transcribed this portion of the work, which he seems to have required most, which however, is not the first, in order, in Śāntiratnākara.

## 2593.

2080. **अग्निनिर्णयः ।** *Agninirṇayaḥ.*

*By Kamalākar Bhaṭṭa from the Śanti Kamalākar.*

Substance, country-made paper. 9¼ × 3¼ inches. Folia, six by counting. Lines, 10 on a page. Extent in ślokas, 110. Character, Nāgara of the eighteenth century.

These leaves are really intended to fill up a lacuna or gap in a copy of Śānti Kamalākara.

It opens शान्तिकमलाकरघटितग्रन्थर्थमिनिर्णयः पत्र १४ ।

The work discriminates between the use of Gṛihya Fire and Laukika or ordinary Fire in different religious ceremonies. It quotes :—

मनुः, मेधातिथिः, हेमाद्रिः, विज्ञानेश्वरः, मिताक्षरा, अपरार्कः, शातातपः, वैजवापः, यज्ञपार्श्वः, आपस्तम्बः, आश्वलायनः, छन्दोगपरिशिष्टे, कर्कः, हेमाद्रौ, मार्कण्डेयः, वायवीये, हेमाद्रौ, प्रजापतिः, जाबालः, स्मृत्यर्थसारः, कात्यायनसूत्रम्, बौधायनसूत्रम्, कातीयपरिशिष्टे, देवयाज्ञिकः, सामवेदे गौतमसूत्रम्, परशुरामः, त्रिकाण्डमण्डनम् ।

## 2594.

9876. **नक्षत्रकष्टावली ।** *Nakṣattrakaṣṭāvalī.*

*By Bhaṭṭoji Dīkṣita.*

Substance, country-made paper. 11 × 5 inches. Folia, 11. Lines, 11 on a page. Extent in ślokas, 125. Character, Nāgara. Date, Saṃvat 1921. Appearance, fresh. Complete.

On the particular diseases contracted under the particular stars, their duration and the propitiatory rites as to their remedies.

*Beginning* :-

श्रीगणेशाय नमः ।

अथ नक्षत्रकष्टावली लिख्यते ।

अश्विन्यां च भवेत्पीडा आमवातस्तथा ज्वरः ।
ज्वरमेतज्ज्वरं चैव पीडा भवति दारुणं ॥
नक्षत्र तत्र दशविंशदिन २० संख्यामिमां पृच्छ
अश्विनौ तत्र दैवत्यौ अश्विना तेजसमन्वकं ॥
आज्यं पञ्चसहस्राणि गौराग्नं होमयेत्ततः
ब्राह्मणानां भोजनं दानं दद्यादेव सुखी भवेत । इत्यादि ।

*End* :—

पूषा च देवता अस्य पूषा तत्र व्रतमन्त्रकं
आज्यमेकं सहस्रन्तु तिलतण्डुलहोमयेत ॥

फलद्रव्याणि देयानि तस्मस्य स्थ[भं] ददेत् ।

अथ मन्त्रः ॐ पृथं नवत्रते नयं नरिष्ये यः कदाचिन स्तोनास्तस्य रूक्षसि । २१ ।

*Colophon* : —

इति श्रीभट्टोजिदीक्षितकृत-नक्षत्रचरण-पृथगविधान-शेषवल सम्पूर्णं । शुभमस्तु । संवत् १६२१ । मिति चैत्रशुक्ला अष्टम्यां मुहूर्त्तः सूर्यभात् ५ स्कन्धे शुभं ततः दशपृष्ठे १० शुभानि ततः २ पक्षे पत्नीनीपादेषु रणे भङ्गः तत उदरे ५ अश्वनाशः ततः हे २ मुखे अर्थ लाभः स्यात् । अथाङ्गप्रधारणं ।

शुभे वारे शुभे लग्ने शुभांशे शोभने तिथौ
अङ्गप्राकरणायोग्यानि शनिलग्ने शनेर्दिने ।

## 2595.

6248. **वास्तुशान्तिप्रयोगः ।** *Vāstu-śānti-prayogaḥ.*

*By Dvivedi Jīvanarāma, son of Jagannātha.*

Substance, country-made paper. 11½ × 5 inches. Folia, 14 Lines, 9 on a page. Extent in ślokas, 250. Character, modern Nāgara. Appearance, fresh. Complete.

*Colophon* : —

इति श्रीमद्द्विवेदि-जगन्नाथात्मज -श्रीमद्द्विवेदि--जीवनराम-विरचिते शिष्टिद्वागमनेयिशाखानुसारिवास्तुशान्तिप्रयोगः ।

Then there are four lines about the efficacy of Śānti.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ वास्तुशान्तिप्रयोगः ।

तत्र गृहप्रवेशात् पूर्व्वेद्युः शुभेऽह्नि वा पूर्व्वाह्णे सपत्नीकः स्नातः शुचिः प्राङ्मुखः शुद्धासने समुपविश्य विराचम्य त्रिः प्राणानायम्य इष्टदेवतास्मरणपूर्व्वकं देशकालौ स्मृत्वा "मम सपरिवारस्य आयुरारोग्यैश्वर्य्यवृद्धये अस्य वास्तोः शुभतासिद्ध्यर्थं वास्तुशान्तिं करिष्ये" ।

## 2596.

### 6002.

Substance, country-made paper. 9 × 3¼ inches. Folia, 23 of which the leaves 14 and 15 are missing. Lines, 7 on a page. Character, Nāgara by a modern hand. Appearance, fresh.

I. अथ वास्तुशान्तिप्रयोगः ।

गृहप्रवेशदिनात् पूर्व्वेद्युः शुभे पूर्व्वाह्णे सपत्नीकः शुचिः प्राङ्मुखो गृहस्वामी प्राणानायम्य, etc., etc.

It ends in 18B. Then follows:—

II. शिलान्यासः ।

19A, इति नूतनगृहे शिलान्यासविधिः ।

Then follows:—

III. अथ कूपोत्सर्गप्रयोगः ।

23A, *Col.*:—

इति गृह्यपरिशिष्टोक्त-जलाशयोत्सर्गप्रयोगः समाप्तः ।

## 2597.

9486. ज्येष्ठाशान्तिः । *Jyeṣṭhāśāntiḥ.*

Substance, country-made paper. 8 × 4 inches. Folia, 11. Lines, 7 on a page. Extent in ślokas, 100. Character, Nāgara. Appearance, old. Complete.

It is a chapter of Saṃskāra Kaustubha, treating of propitiatory rites to be performed when a child is born under Jyeṣṭhā, an evil asterism.

*Beginning*:—

श्रीगणेशाय नमः ।

अथ ज्येष्ठाशान्तिविधिः । तत्राथर्वणे

ज्येष्ठाद्ये जननीमाता द्वितीये जननीपिता ।

तृतीये जननीभ्राता स्वयं माता चतुर्थके ॥

आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ॥
नवमे श्वशुरं हन्ति सर्व्वं हन्ति दशांशकः । इत्यादि ।

*End* :—

अज्ञानादथवा ज्ञानात् वैकल्यात् साधनस्य च ।
यन्न्यूनमतिरिक्तं वा तत्सर्व्वं क्षन्तुमर्हसि ॥

ततो विसर्ज्जनं आचार्य्यहस्ते सोपस्करां प्रतिमां दत्त्वा अग्निं सम्पूज्य विभूतिं धृत्वा गच्छगच्छेति तं विसृज्य ज्येष्ठाशान्तिसङ्कल्पं यन्मया लब्धं तेन तेनेन्द्रनामेश्वरः (?) प्रीयतामिति ॥

*Colophon* :—

इति संस्कारकौस्तुभे ज्येष्ठानक्षत्रशान्तिः समाप्त ।
शुभमस्तु । इदं पुस्तकं जोसिशङ्करजिसुत-केवलरामेण लिख्यते ॥
कल्याणमस्तु ।

## 2598

### 6228. ऋतुशान्तिः or रजोदर्शनशान्तिः ।

*Ṛtuśāntiḥ or Rajodarśanaśāntiḥ.*

*By Kāśī Dīkṣita.*

Substance, country-made paper. 8¼ × 4 inches. Folia, 31. Lines, 8 on a page. Extent in ślokas, 500. Character, modern Nāgara. Appearance, fresh. Complete.

Colophon in 30A, इति काशीदीक्षितकृत-(added by a later hand) रजोदर्शनशान्तिः समाप्ता ।

Then begins गर्भाधान which ends abruptly.

*Beginning* :—

श्रीगणेशाय नमः । शारदादेव्यै नमः । श्रीसीतारामाभ्यां नमः ।

अथ ऋतुशान्तिप्रारम्भः ।

श्रीमद्भगवतो महापुरुषस्य पुण्यतिथौ मम भार्य्यायाः प्रथमरजो-
दर्शने चैत्रदुष्टमासादिसूचित सकलारिष्टनिरसनद्वारा श्रीपरमेश्वर-

प्रीत्यर्थं नग्रहमखां प्रीनकोक्तां भुवनेश्वरी-इन्द्राणी-इन्द्रदेवत्यां महत्-शान्तिं करिष्ये ।

## 2599.

6233. **ग्रहयज्ञपद्धतिः** । *Grahayajñapaddhatiḥ.*

*By Kāśī-Dīkṣita, son of Sadāśiva.*

Substance, country-made paper. 12 × 5 inches. Folia, 32. Lines, 10 on a page. Character, modern Nāgara Appearance, fresh.

The original from which it was copied was defective in the middle and the gap left in it was between fol. 19-20. It has later on been filled up by three leaves of another older MS.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ नवग्रहयागविधिर्लिख्यते ।

यजमानः सपत्नीकः स्नातः शुचिः यस्य गजाननकुलदेवताश्चभीष्ट-देवताः संस्मृत्य ब्राह्मणादीन् नमस्कृत्य ।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।

लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥

*Last Colophon* :—

इति याज्ञिकसदाशिवदीक्षितसुत काशीदीक्षितकृत-ग्रहयज्ञपद्धतिः समाप्ता ।

## 2600.

6300. **गोप्रसवशान्तिः** । *Goprasavaśāntiḥ.*

*By Anantācārya.*

Substance, country-made paper. 9 × 6½ inches. Folia, 4. Lines, 8 on a page. Extent in ślokas, 70. Character, Nāgara of the early eighteenth century. Appearance, old, torn and discoloured. Complete

*Colophon* :—

इति श्रीमदनन्ताचार्यविरचितं गोप्रसवशान्तिः समाप्तं ।

*Beginning* :—

अथ यथाकाले सम्भृतसम्भारः कृताभ्यङ्गो यजमानः सपत्नीकः [स]बालः पीठोपविष्टः प्राणानायम्य देशकालौ स्मृत्वा ममास्य बालकस्यामुकनक्षत्रोत्पन्नस्य तन्नक्षत्रजननसूचितपित्रादिसर्व्वारिष्टनिरसनद्वारा दीर्घायुष्ट्वाद्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च शौनकोक्तप्रकारेण गोमुखप्रसवं करिष्ये इति संकल्प्य गणेशं संपूज्य वेदविदं दरिद्रं कुटुम्बिनं ब्राह्मणं अत्र गोप्रसवाख्ये कर्म्मणि आचार्य्यत्वेन त्वामहं वृणे इति वृत्वा आचार्य्य त्वं यथा स्वर्गे० इति प्रार्थयेत् । ... ...

... ... ... ... ... ...

... ... ... अष्टदलपद्मं निर्म्माय

तत्र तिलान् विकीर्य्य तदुपरि प्राङ्मुखं पश्चिमपादं शिशुं निधाय त्रिगुणितेन सूत्रेण रक्तेन वाससा शिशुं तृर्थ्यं वेष्टयित्वा शिशुसमीपे गोमुखमानीय संश्लेषं कृत्वा गोमकाग्रात् शिशोः प्रसवं भावयित्वा गामपसार्य्य विष्णुर्योनिमिति सूत्रेणैकीकृतं पञ्चगव्येन शिशुं स्नापयेत् ।

*End* :—

पश्चिमभागे सकुटुम्बं यजमानमुपवेश्य ग्रहकलसवरुणकलसोदकेन यजमानं स्नापयेत् आपोहिष्ठेति मन्त्रैः ततो यजमान आचार्य्यादिभ्यो दक्षिणां 'दत्वा भूयसीं संकल्प्य ब्राह्मणभोजनसंकल्पं कृत्वा कर्म्मेदं समर्प्य मूलशान्तिं कुर्य्यात् ।

## 2601.

### 6213. सार्पविधानम् । *Sārpavidhānam.*

*By Bālamukunda.*

Substance, country-made paper. 12 × 5 inches. Folia, 8. Lines, 11 on a page. Extent in ślokas, 220. Character, modern Nāgara. Appearance, fresh. Complete.

Pacifying rites, when a child is born under the evil star, Aśleṣā which is represented by the figure of a snake.

*Beginning* :—

ॐ श्रीगणेशाय नमः ।

अथेत्यपक्रम्य मार्पदैवते गणसमान यत्र यत्र विधिरित्येवमादि

अश्लेषागणान्तयोः प्रसवे इदमेवानुष्ठेयं माध्यन्दिनैः ।

*Colophon* :—

इति मार्पविधानं संगृह्यते बालमुकुन्देनेति शिवम् ।

Lines more by a much smaller hand on the same subject.

## 2602.

### 5799. दशमुखकोटिहोमपद्धतिः ।

*Daśamukhakoṭihomapaddhatiḥ.*

*By Devabhadra at the request of Balabhadra, Rājā of Kāśī, in the middle of the eighteenth century.*

Substance, country-made paper. 12 × 5 inches. Folia 15. Lines, 10 on a page. Extent in ślokas, 360. Character, Nāgara of the nineteenth century. Appearance, fresh. Complete.

*Beginning* :—

श्रीगणेशाय नमः ।

नत्वा विनायकं देवं शिवं श्यामेश्वरं गुरुं ।

ग्रहयज्ञविधिः सम्यक् प्रयोगो रच्यते मया ॥

अथ शान्तिरत्न-शान्तिसार--शान्तिमयूख- नृसिंहप्रवर्तननिर्णय-

प्रयोगदीपिका-ग्रहदीपिका-वाशिष्ठीभाष्य-नारायणभट्टी प्रभृत

प्रभृती ग्रन्थान् ।, etc.,

See the next number.

*It ends* :—

ज्ञातोऽस्मी मनसारामसूनुना गौतमेन तु ।

बलभद्रसिंहेनैव काशीशेन च भूभृता ॥

नैवाभिमन्यदेशे वा कोटिहोमो दशाननः ।

केनाप्यद्यकृतो यावत् अतः काल + + ॥

यस्य श्रमः समुत्पन्नः प्रयोगस्यास्य लेखने ।
व्यामेश्वरः शिवस्तेन प्रीयतां सन्निधिस्थितः ॥
पुनस्तेनैव तत्रायं कृतो घृतिशताधिके ।
सप्तविंशे वत्सरे माघे कारितोपि मया तथा ॥

*Colophon* :—

इति श्रीमत् महायाज्ञिक-नागरज्ञातीयपाठक-श्रीरामचन्द्रसूनु-गङ्गाधरपाठकवंशसम्भूत पाठक-श्रीबलभद्रात्मज-देवभद्रकृत संक्षिप्तो दशमुखकोटिहोमप्रयोगः समाप्तः ।

अथ शतमुखे विशेष उच्यते । इति दशमुखकोटिहोमप्रयोगः समाप्तः ।

There are ten lines more.

## 2603.

6232. **दशमुखकोटिहोमप्रयोगः (संक्षिप्तः) ।**

*Daśamukhakotihomaprayogaḥ (Brief).*

*By Devabhadra, son of Balabhadra Pāṭhaka, a descendant of Gaṅgādhara Pāṭhaka, son of Mahā Yājñika Nāgarajñātiya Rāma Candra Pāṭhaka—under the patronage of Balivandya (perhaps Balabhadra) Siṅha, Rājā of Benares.*

Substance, country-made paper 9¾ × 4¼ inches. Folia, 8. Lines, 17 on a page. Extent in slokas, 250. Character, Nāgara. Date, Samvat 1852. Appearance, discoloured. Complete.

*Colophon* :—

इति श्रीमन्महायाज्ञिक-नागरज्ञातीयपाठक-श्रीरामचन्द्रसूनु-गङ्गाधरपाठकवंशसम्भूतपाठक-श्रीबलभद्रात्मज-देवभद्रकृतः संक्षिप्तो दशमुखकोटिहोमप्रयोगः समाप्तः ।

*Post Colophon* :—

संवत् १८०२ क्षय नाम संवत्सरे अधिकभाद्रपदे अमावास्या रविवासरे तद्दिने इदं पुस्तकं गोलवलकरोपनामक-बापुभट्टेन लिखितम् स्वार्थं परोपकारार्थं च ।

श्रीकृष्णार्पणमस्तु ॥

*Beginning* : --

श्रीगणेशाय नमः ।

नत्वा विनायकं देवं शिवं व्यासेश्वरं गुरुम् ।

ग्रहयज्ञविधेः सम्यक् प्रयोगो रच्यते मया ॥

अथ शान्तिरत्न--शान्तिसार--शान्तिमयूख--वृहल्लघुद्वैतनिर्णय-प्रयोगदीपिका ग्रहदीपिका--वाशिष्ठीभाष्य--नारायणभट्टीय-ग्रहमखप्रभृतीन् ग्रन्थान् अन्यांश्च नानानिबन्धान् समालोक्य तेभ्यः सारांशमादायाधीते सरहस्यावयवांक्रमानीये लीलावत्यादिगणितशास्त्रे संगृह्य च दशमुखकोटिहोमाख्यग्रहयज्ञस्य संक्षेपेण प्रयोगो रच्यते ।

त्रिविधो ग्रहयज्ञः अयुतलक्षकोटिहोमात्मकश्चेति तत्र प्रथमोऽयुतहोमो, द्वितीयो लक्षहोमः, तृतीयः कोटिहोमः । अयुतलक्षकोटिरिति समिदादिसंख्याव्यतिरेकेण प्रधानयवमिश्रघृताक्तसिलाहुतीनां संख्याकर्मणो नामधेयं । अयुतहोमो लक्षकोटिहोमयोः प्रकृतिः लक्षकोटिहोमौ तु तद्विकृती । अयुतहोमधर्माः लक्षकोटिहोमयोर्भवन्ति । कोटिहोमश्चतुर्विधः, एकमुखो द्विमुखो दशमुखः शतमुख इति ; मुखशब्देन कुण्डानि । एकमुखे एकं कुण्डं द्विमुखे द्वे दशमुखे दश, शतमुखे शतमिति । चतुर्विधप्रकाराणामेकमुखप्रकृतिः । अन्ये द्विमुखादयस्तु तद्विकृतयः । अतोऽयुतहोमो-यात् प्रकृतिभूतात् विशेषत एकमुखस्य विहिता धर्माः द्विमुखादि-द्विचित्रविधेषु भवन्ति । कुण्डमण्डपस्यापि एवमेव निर्णयोऽनादेशे । आदेशे तु यथादेशं । तत्रादौ शुभेऽहनि कुण्डमण्डपकरणप्रकारः स च रामवाजपेयि कुण्डरत्नाकर-कुण्डसिद्धि-कुण्डोद्योत-कुण्डार्क-

कुण्डकौमुदी--कुण्डकल्पद्रुम--कुण्डकल्पलता--कुण्डभास्कर--कुण्डार्णव-कुण्डतत्त्व-कुण्डशिरोमणिप्रभृति कुण्डमण्डपग्रन्थेभ्यः उक्तग्रन्थेभ्यो-ऽन्येभ्यो निबन्धेभ्यश्च सन्दिग्धस्थानेषूपपत्त्या-विरोधान् परिष्कृत्य सारवन्नाम्नात्समादाय संक्षेपेण चूर्णिकाभिधास्यते ।

*End* :—

गोष्ठेण गौतमेनांशु (?) विघ्नेशस्य प्रसादतः ।
बलभद्रतनूजेन देवभद्रेण धीमता ॥ १ ॥
मयैवैष प्रकारेण कोटिहोमो दशाननः ।
कारितस्तस्य सम्पूर्त्तिर्जाताऽद्य श्रवणी दिने ॥
कृतोऽसौ मनसारामसूनुना गौतमेन तु ।
बलिवंशसिंहेनैव काश्मीरोषनभूभृता ॥
नैवास्मिन्नन्यदेशे वा कोटिहोमो दशाननः ।
केनाप्यद्यकृतो यावदतः कालमिहालिखम् ॥
यश्च श्रमः समुत्पन्नः प्रयोगस्यास्य लेखने ।
व्यासेश्वरः शिवस्तेन प्रीयतां सन्निधिस्थितः ॥

## 2604.

5127. **नवग्रहयागपद्धतिः** । *Navagrahayāgapaddhatiḥ.*

*By Bhavadeva Bhaṭṭācārya.*

Substance, country-made paper. 16 × 3½ inches. Folia, 11 (by counting). Lines, 7, 8 on a page. Characters, Bengali of the eighteenth century. Appearance, old.

There are leaves missing here and there. But there being no leaf marks, it is hard to say which of the leaves are missing.

*Beginning* :—

नवग्रहं नमस्कृत्य देवीं सरस्वतीन्तथा ।
कृता श्रीभवदेवेन ग्रहयागस्य पद्धतिः ॥
अथातः सम्प्रवक्ष्यामि यदुक्तं ब्रह्मयामले ।
सप्ताङ्गराज्यकामानां ग्रहार्थं शान्तिकं वदेत् ॥

*Colophon* :—

इति श्रीभवदेवभट्टाचार्य्यविरचिता नवग्रहयागपद्धतिः समाप्ता ।

## 2605.

### 6304. मालवीयप्रयोगप्रकाशः (ग्रहयज्ञप्रयोगः) ।

*Mālavīyaprayogaprakāśaḥ, (Grahayajñaprayogaḥ).*

*By Yajñeśvara Śarman.*

Substance, country-made paper. 9 × 6 inches. Folia, 40. Lines, 8 to 11 on a page. Extent in ślokās, 880. Characters, Nāgara. Copied in Saṃvat 1851. Appearance, fresh. Complete. The first leaf is a restoration in a recent hand.

This appears to be part of a comprehensive work on ritual, called Mālavīya-prayoga-prakāśa—the author being a Mālavī Brāhmaṇa. This part relates to planetary rites.

The Maṅgalācaraṇa and the object :

गणाधिपं नमस्कृत्य देवीं वाग्देवतां गुरुम् ।
ग्रहयज्ञं प्रकुर्व्वेहं [श्री]यज्ञेश्वर(शर्म्मणा) [नामकः] ॥
बालानान्तु सुबोधाय विबुधानां मनोरमं ।
अनेकग्रन्थान् निःसार्य्य ग्रहयज्ञं प्रचक्रमे ॥

चन्द्रादिग्रहानुकूलसमये शुभे दिने कृतनित्यक्रियो यजमानः शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः पत्नीं चोपवेश्य आचम्य पवित्रधारणं कृत्वा पवित्रे स्थो वैष्णव्यौ, etc., etc.

*End* :—

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥

ब्राह्मणान् भोजयित्वा दीनान्धांश्चान्यादीन् संतोष्य स्वयं सुहृन्मित्रादिभिर्युतः सोत्साहः सन्तुष्टो हविष्यं भुंजीतेति शिवम् ।

*Colophon* :—

इति श्रीमालवीयप्रयोगप्रकाशे ग्रहयज्ञप्रयोगः समाप्तः ।

*Post Colophon* :—

सं १६५१ श्रावण सु ११ मालवीयोपनामकजगन्नाथस्येदं पुस्तकम् । लिः कालकाप्रसाद काश्यां गोघट्टे वालेवीरके गल्लीमे । शुभं भवतु ॥

## 2606.

4068.

Substance, birch bark. 7½ × 7¼ inches. Folia, 163. Lines, 14 on a page. Characters, Kāśmirī. Appearance, very old and damaged. Incomplete both ends.

A priest's collection :—

अतिजीर्णमवृश्चाद्भरतां गतप्रायमिदं भूर्ज्जपत्रलिखितं पुस्तकम् ।

### I.

Vedic sūktas for the propitiation of the planets.

*Topics* :—

इति ग्रहेष्टिब्राह्मणं समाप्तम् ; इत्यग्निसूक्तं समाप्तम् ; इत्यादित्यस्य ; इति चन्द्रस्य ; इति भौमस्य ; इति बुधस्य : इति जीवस्य ; इति शुक्रस्य ; इति शनैश्चरस्य ; इति राहोः ; इति केतोः ; इत्यगस्तस्य ; इति वास्तोस्पतेः ; इति क्षेत्राधिपतेः ; इति सर्व्वेषाम् ; इति बुधस्य , इति जीवस्य ; इति शुक्रस्य ; इति सौरस्य ; इति राहोः ; इत्यगस्तस्य ;

### II.

Vedic Mantras relating to the chief sacraments.

इति विवाहब्राह्मणम् ; इति अभिषेकमन्त्राः ; इति बीजवपनम् ; इति नामकरणम् ; इति प्रदक्षिणम् ; इति मौञ्जीबन्धनमन्त्राः समाप्तः ; इति दण्ड-मन्त्राः ; इति ध्यायोपाकरणम् ; इति मन्त्रशौचकव्रता + + + ; इति गोदा( धा ) नमन्त्राः ; इति यथाक्रमेणोपनयनविधानं समाप्तम् ; इति पूर्व्वदारा + + + + ; इति विष्णुपञ्चकम् ; इति दशपञ्चकं समाप्तम् ;

### III.

Astronomy, as applied to Smṛti.

अथ ताराफलानि ; इति विवाहपटलम् ;

IV.

Prognostication :—

अथ शकुनम्. Two leaves only of which the lower halves have been lost.

VI.

*Miscellaneous topics* :

अथ वास्तुप्रवेशः; अथ चिकित्सा नक्षत्राः; अथ रोगमुक्तस्नानविधिः; अथ बुधवार + + जफलम्; अथ योगिन्युदयः; अथ पुण्यकालविचारः; इति वृद्धिश्राद्धम्।

In the remaining leaves there are various figures and diagrams.

## 2607.

### 7742. नवग्रहमखः। *Navagrahamakhaḥ.*

Substance, country-made paper. 9 × 4 inches. Folia, 14. Lines, 10 on a page. Extent in ślokas, 280. Characters, Nāgara of the seventeenth century. Appearance, old, soiled and discoloured. Complete.

Directions for the rites for propitiating the nine planets, being in the form of an interlocution between Vaśiṣṭha and Rāmacandra.

*Beginning* :—

श्रीगणेशाय नमः।

सविश्वादिग्रहान् सर्व्वान् प्रणम्य ऋषिसत्तमः।
मखं नवग्रहं ब्रूते वशिष्ठो मुनिपुंगवः॥
श्रद्धया पृच्छमानस्तु रामेण विनयेन तु।
वेदवेदाङ्गशास्त्रेषु कुशल[ः] त्वं महामुने॥
किमर्थं मे वनं जातं कस्माद्राज्याद्विवासितः।
रामस्य वचनं श्रुत्वा वशिष्ठो भाषतेऽखिलं॥
सुरासुरास्तथा यक्षाः सर्व्वे वर्णा द्विजादिकाः।
खेचरैः प्रतिकूलैस्तु लभंते विविधापदं॥
ग्रहा राज्यं प्रयच्छन्ति ग्रहा राज्यं हरंति च।
ग्रहैषु व्यापितं सर्व्वं त्रैलोक्यं सचराचरं॥

*End* :—

मुष्टिमात्रा तथा श्वेता अभग्नाश्चैव चालिताः ।
ग्रहाणां स्थापने प्रोक्ता अर्द्धार्द्धप्रतिदैवतं ॥

*Colophon* :—

इति श्रीमुनिना वशिष्ठेनोक्तं संपूर्णं ॥

*Post Col.* :—

वेदिभट्टुनिपोथि ।

## 2608.

1706. *The same here called* बृहद्वाशिष्ठी नवग्रहप्रकाशिका ।

*Bṛhadvāśiṣṭhī Navagrahaprakāśikā.*

Substance, country-made paper. 11 × 4½ inches. Folia, 11. Lines, 12 to 15 on a page. Extent in ślokas, 300. Characters, Nāgara. Appearance, tolerable. Generally correct. Complete.

The same work as the last.

*Colophon* :-

इति नवग्रहप्रकाशिका.बृहद्वाशिष्ठी समाप्तमिति ॥

Then 9 lines more on the processes of the Navagrahayajña.

## 2609.

5777. वृद्धवाशिष्ठीभाष्यम् । *Vṛddha Vāśiṣṭhī Bhāṣyam.*

*By Veda Miśra.*

Substance, country-made paper. 10 × 4½ inches. Folia, 33. Lines, 7, 10 on a page. Character, Nāgara. Date, Saṃvat 1569. Appearance, old and soiled.

A commentary on the above.

*Beginning* :—

ॐ नमो विघ्नवल्लीविध्वंसनाय ।
वृद्धवाशिष्ठीभाष्य[ ] प्रारभ्यते ।
मि॰देवशर्म्मा अभिधानेन सपठनार्थं स्वयं ज्ञानार्थं च लिख्यते ।

प्रणम्य पूर्व्वं प्रणवं पुराणं
तथैव कात्यायनपादपद्मम् ।
शान्तेर्महाभाष्यमिदं तनोति
श्रीवेदमिश्रः श्रुतितो विरच्य ॥

सवित्रादिग्रहान् नत्वा वशिष्ठादीन् महान् (?) ऋषीन् ।
वेदमिश्रः स्फुटं ब्रूते भाष्यं शास्त्रानुसारतः ॥

सवित्रादि सविता सूर्य्य आदि येषां ते तथोक्ताः तान् सवित्रादि-ग्रहान् केतुपर्य्यन्तान् प्रकर्षेण नत्य नमस्कारं दण्डवत् काष्ठवत् कृत्वा ऋषिसत्तमः ऋषिस्त्रिकालदर्शी स्यादिति कल्पकाराः। वशिष्ठो महर्षिसत्तमः प्रकृष्टे तरतमौ नवग्रहमखसंज्ञं ब्रूते। अपृष्टो वक्त-भाषत इत्यादिना दोषसम्भवात् रामेण प्रिया पृच्छ्यमानः किल न्यायेन परमविनयेन। तद्विनयमाह महामने त्वं वेदवेदाङ्गानि शिक्षा ज्योतिषं छन्दः निरुक्तं व्याकरणं कल्पसूत्रं एतद्वेदाङ्गानि तेषु वेदवेदाङ्गशास्त्रेषु त्वं कुशलः तत्प्रश्नमाह। किमर्थं। राम उवाच. मे मम किमर्थं (वसनार्थं) [विवासनार्थं] कस्माद्विवासनं रामस्य एवं विप्रश्नं श्रुत्वा वशिष्ठः अखिलं ते समग्रं कारणं भाषते। वसनाय। राज्यविवसनाय वेति। ४। सुरासुराः सुरा इन्द्रादयः असुरा वलिरावणादयः द्विजादिकाः वर्णाश्चत्वारः अपवर्गाश्चेति खेच[राः] आकाशे चरन्तीति खेचराः तैः खेचरैः प्रतिकूलैः दुःस्थितैः वि[ वि ]व[धां] आपदं लभन्ते। ग्रहा राज्यं पूर्व्वोक्ता ग्रहाः सुस्थानस्थिताः राज्यं प्रयच्छन्ति। दुःस्थिता हरन्ति। तैः ग्रहैः सचराचरं त्रैलोक्यं व्यापितं। चरं देवमानुषादिकं अचरं पर्व्वत-वृक्षादिकमिति। ५।

त्वं राम यद्वने जात (?) यस्मात् सीतायाः सह वियोगाज्जातः। तत्कारणं शृणु। एकेन ग्रहेण वक्रेण सर्व्वे ग्रहा वक्रदशागा भव-न्तीति। ६।

19A, अयुतहोमविधानमिति प्रश्नस्य। अथ लक्षहोमविधानमारभ्यते;
23A, वशिष्ठोक्तलक्षहोमस्य मूलसूत्रं। अथ वशिष्ठोक्तलक्षहोमस्य पद्धतिभाष्यं

विधिप्यते ; 28A, इति भाष्यं लक्षहोमस्य । अथ पदार्थानुक्रमणिका : 29B, इति लक्षहोमविधिः । अथ कोटिहोमं प्रारभ्यते । प्राप्तविधानं तत् पराशरे-णोक्तमभिलिख्यते ।

33A, (Last Colophon) इति पराशरोक्तं कोटिहोमविधानं समाप्तम् ।

*Post Colophon Statement* :—

संवत् १५६६ वर्षे पौषवदी ५ सोमे वारेशाग्रामवास्तव्य आभ्यन्तर मोटज्ञातीय चि० देवशर्म्म इयं पुस्तिका लिलिखे । स्वयं लिखितं स्वपठनार्थम् । तथापुत्रादीन् पठनार्थं ज्ञानार्थञ्च ।

## 2610.

### 1891. रोगोत्पत्तिशान्तिप्रयोगः ।

*Rogotpattiśāntiprayogaḥ.*

Substance, country-made paper. 8½ × 4 inches. Folia, 9. Lines, 9 on a page. Extent in ślokas, 180. Characters, Nāgara of the eighteenth century. Appearance, faded. Complete.

*It begins* :—

अथ बौधायनोक्त[ा] ज्वराद्युत्पत्तौ शान्तयः

प्रतिपदि कष्टं सदेहो वा दिनान्यष्टादश अग्निर्देवता अग्निरस्मीति पूजामन्त्रः । हैमी प्रतिमा घृतधूपो घृतदीपश्च यथासम्भवं नैवेद्यं घृतं होमद्रव्यं शान्तिर्भवति । अथ सर्व्वत्र प्रथमतः तद्देवतामन्त्रजपः सहस्राधिकः पश्चात्पञ्चाशहोमदानाच्छिहोमसंख्या च अष्टोत्तरशतादि व्याधितारतम्येन कल्प्या सहस्रं मत्युनिर्द्दिशो द्वितीयायां दिनानि षोडश ।

It contains Tithiśānti, Vāraśānti, and Nakṣatraśānti.

The work comes to an end in 8B :—

इति रोगोत्पत्तिशान्तिप्रयोगः, after which there are two pages more beginning with : मदनरत्ने[ऽ]पित्तु । सर्व्वनक्षत्रशान्तिषु गायत्र्या

यमोद्दिष्टेन होमोऽष्टोत्तरशतसंख्यः। बलिश्च तत्तन्नक्षत्रदेवतायै। सोऽपि होमाद्यशिष्टद्रव्येण क्वचिदन्येन तत्र तत्र तत्र वक्ष्यते।

## 2611.

### 9494. ग्रहणशान्तिः। *Grahaṇaśāntiḥ.*

Substance, country-made paper. 8 × 4 inches. Folia, 3. Line 10 on a page. Extent in ślokas, 30. Characters, Nāgara. Appearance, old. Verse. Generally correct. Complete.

It treats of propitiatory rites to be performed when a child is born at the time of the eclipse of the sun or of the moon.

*Beginning* :—

श्रीगणेशाय नमः।

अथ ग्रहणोत्पत्तौ शान्तिः।

शौनकः।

ग्रहणे चन्द्रसूर्य्यस्य प्रसूतिर्यदि जायते।
व्याधि[ः] पीड़ा तदा स्त्रीणामादौ तु स्वतुदर्शनात् ॥ १ ॥
इत्थं सञ्जायते यस्तु तस्य मृत्युर्न संशयः।
व्याधि[ः] पीड़ा च दारिद्र्यं शोकश्च कलहो भवेत् ॥ २ ॥
शान्तिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया।
यस्मिन् ऋक्षे विशेषेण ग्रहाणां सम्भजायते ॥ ३ ॥
तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत्।
यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥ ४ ॥
सूर्य्यग्रहे सूर्य्यरूपं सुवर्णेन विशेषतः।
चन्द्रं चन्द्रग्रहे धीमान् रजतेन विशेषतः ॥ ५ ॥ इत्यादि।

*End* :—

अकालमृत्युशोकश्च व्याधिं पीड़ाश्च नाप्नुयात्।
सख्यं सौमनस्यं नित्यं सौभाग्यं लभते नरः ॥
इत्थं ग्रहणजातानां सर्व्वारिष्टविनाशनं।
कथितं भार्गवेणेदं शौनकाय महात्मने ॥

इति ग्रहणशान्तिः।

## 2612.

### 8623. धनिष्ठादिपञ्चकशान्तिः ।

*Dhaniṣṭhādi-pañcakaśāntiḥ.*

Substance, country-made paper. 10 × 5 inches. Folia, ?. Lines, 10 on a page. Extent in ślokas, 60. Characters, Nāgara. Date, Saṃvat 1957. New. Complete.

Complete in 3 leaves. Copied in संवत् १९५७ माघ सुदि वार ।

## 2613.

### 6296. वास्तुशान्तिप्रयोगः । *Vāstuśāntiprayogaḥ.*

Substance, country-made paper. 10 × 5 inches. Folia, 14. Lines, 12 on a page. Characters, modern Nāgara Appearance, fresh. Incomplete at the end.

*Beginning* :

श्रीगणेशाय नमः ।

अथ वास्तुशान्तिप्रयोगः ।

गृहारम्भकाले गृहनिर्म्माणविध्यकरणे गृहप्रवेशदिने गृहनिर्म्माणविधिमन्त्रान् पठेत् । गृहप्रवेशदिने गृहउपलेपन-परि[ष्क]रणं कुंकुमाक्तमुष्टिं वितानध्वजपताकातोरणायुक्तपुष्पमालादिभिः सर्व्वदिक्षलंकृते फलपुष्पपल्लवालंकृते पूर्णकलसैरलंकृते सूत्रवेष्टिते वादित्रघोषैः संघोषिते व्रीहियवादिबीजसहिते सति यजमानः मङ्गलस्नातः ... ... ... ... ... ... ...

... मम नूतनगृहाश्रित-हीनाधिकाङ्ग-समवेधादि-दुष्टायव्ययादि-जन्यसर्व्वदोषशान्त्यर्थं पुष्टि-तुष्टि-पुत्राद्यभिवृद्ध्यर्थं अस्मिन् नूतनगृहे चिरकालनिवासार्थं वास्तुमण्डलदेवतासहितवास्तुपुरुषसुप्रसन्नार्थं गृहप्रवेश-गृह्यसूत्रमात्स्याद्यनुसारेण सग्रहमखान् वास्तुशान्तिं साहं करिष्ये ।

6A. वास्तुपुरुषमूर्त्तिद्वयं यथाशक्त्या सुवर्णेन चतुर्भुजं शंखचक्रशार्ङ्गवरदाभयहस्तं कृत्वा अग्न्युत्तारणादिप्राणप्रतिष्ठां कृत्वा ध्यायेत् :—

अकुंचितकरं वास्तुमुत्तानसुमेराकृतिं (?) ।
स्मरेत् पूर्व्वं (सकुडयादि) [सकुड्यादि] निवेशे चोर्द्धगाननम् ॥
शक्तिपाणिं महाबाहुं फणामणिविभूषितम् ।
वास्तुरूपं सुवर्णेन ध्यात्वैव मण्डलं न्यसेत् ॥
एकाशीतिपदे भक्ते क्षेत्रे वास्तुपुमानसौ ।
पूर्व्वोत्तरे शिरः आस्ते नैर्ऋत्यामिरधोमुखः ॥
तस्य शीर्ष्णो [:] [शिरसौ] (शौर्वि) तद्दापवत्सस्तयोरसि ।
पर्ज्जन्याद्याश्च [च]त्वारो + कर्णोंगः स्थलांसके ॥
सत्याद्याः पञ्चबाहुस्थाः कर्णयोर्वितथद्वयम् ।
हस्तौ सविद्रसावित्रौ विवस्वानुदरे स्थितः ॥
उदरे कटिजंघास्फिक् चत्वारस्तु यमादिकाः ।
एते दक्षिणपार्श्वस्था वामपार्श्वस्थिताः परे ।, etc., etc.

The MS. is very incorrect.

## 2614.

### 5984. शालाकर्म्मादिवास्तुशान्तिः ।

*Śālākarmādivāstuśāntiḥ.*

Substance, country-made paper. 8¼ × 4¼ inches. Folia, 59. Lines, 7 on a page. Extent in ślokas, 590 Characters, Nāgara Date, Saṃvat 1852. Appearance, fresh. Complete

A manual of the rites to sanctify the site of a house.

*Beginning* :—

श्रीगणेशाय नमः ।

अथास्य प्रयोगः ।

तत्रादौ स्नातः सुप्रक्षालितपाणिपाद[:] प्राङ्मुख(ो)[उ]पविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य वास्तोः शुभतासिद्ध्यर्थं शालाकर्म्मादिवास्तुशान्तिमहं करिष्ये इति संकल्प्य तदङ्गतया विहितं गणेशपूजामातृपूजाभ्युदयिक-आचार्य्यब्रह्मऋत्विग्वरणानि पुण्याहवाचनान्तं कुर्य्यात् ।

The scribe's note :—

लिखितं द्विवेदि अम्बयरामनागर विशालनगरस्थ सुखस्थानमथुरायां षड़ानन-पुरमध्ये सम्पूर्णकृतं । सं १८५२ ।

मिति मार्गशीर्षवदी २ रवौ दिने सम्पूर्णा श्रीमालीज्ञात चपाठी श्रीत्र्यम्बके-श्वरात्मजगरामेश्वरपठनार्थं ! शुभं भूयात् ।

There are four lines more.

## 2615.

2081. **अग्निदग्धगृहपुनर्विधानम् ।**

*Agnidagdhagṛhapunarvidhānam.*

Substance, foolscap paper. Folium, 1. Character, Nāgara. In the nineteenth century hand-writing. Appearance, discoloured. Complete.

*It begins* :—

अथ अग्निदग्धगृहपुनर्विधानं ।

श्रीकृष्ण उवाच ।

अग्निदग्धे यदा गेहे पुनर्वासं विधीयते ।
तदा विधानमुद्दिष्टं ऋषिभिस्तत्त्वदर्शिभिः ॥
कुड्यादि पातयित्वा च भूमिञ्च निखनेत् सुधीः ।
विधाय समतां तत्र जलैरापूरयेत् ततः ॥
कर्द्दमेन समालिप्य स्थण्डिलं मार्ज्जयेत्ततः ।
पञ्चामृतैः समभ्युक्ष्य मखुपञ्च विधीयते ।
विदधीत ततः शान्तिं वारुणीं जातवेदसीं ॥

*Colophon* :

इति विधानमालायां अग्निदीप्तगृहपुनर्विधानं ।

## 2616.

6227. **धर्म्मशान्तिः ।** *Dharmaśāntiḥ.*

Substance, country-made paper. 10½ × 5 inches. Folia, 7. Lines, 10 on a page. Character, modern Nāgara. Date, Saṃvat 1935. Appearance, fresh.

The MS. begins in the middle of a sentence, the original MS. being defective in the beginning.

*Colophon* :

इति धर्म्मशान्तिकर्म्म समाप्तम् ।

*Post Colophon* :-

मितौ भादो वदौ ६ वार रविवासरे संवत् १८१५ । शुभम् ।

*Dharmaśānti* is performed on the 17th day of one's father's death, which gives him a good place among the *Manes* and then an eternal abode in heaven. It consists of gifts to Brāhmaṇas of a great many things, including an image of Lakṣmī with Nārayāna.

2A. ॐ अद्यामुके मासे अमुकपक्षेऽमुकतिथौ अमुकवासरे अमुकगोत्रस्य पितुरमुकशर्म्मणः विशुद्धपितृपांक्तेयभवनपूर्व्वकस्वर्गप्राप्तिकामः अद्यतनसप्तदशाह-दिने धर्म्मशान्तिमहं करिष्ये इति प्रतिज्ञा तत्साङ्गतया गणेशादिपूजनं चाहं करिष्ये।

अथ स्वस्त्ययनं ॐ अस्मिन् इन्द्र इति ऋग्भिः। अथ संकल्पः अथ तत्सदद्य यथासम्भवोपचारैः धर्म्मशान्तिकर्म्मणि विशुद्धपितृपांक्तेयभवनपूर्व्वक-अक्षयस्वर्ग-लोकप्राप्तिकामनया कर्त्तव्यशय्यादिदानाङ्गत्वेन गणपत्यादिपूजनमहं करिष्ये।

## 2617.

### 3244.

Substance, country-made paper. 8¾ × 4½ inches. Folia, 2. Lines, 11 to 14 on a page. Extent in ślokas, 32. Character, Nāgara of the eighteenth century. Appearance, discoloured.

I.

गण्डजातशान्तिः ।

*Beginning* :

गर्गः

अश्विनीमघमूलादौ त्रिवेदनवनाडिकाः ।

रेवती सार्प्यशाक्रान्तौ मास १२ वत्स ११ रमाः ६ क्रमात् ॥ १ ॥

अश्विनीमघमूलादौ नाडिका त्रितयन्तथा ।
अश्विनीमघमूलानां पूर्व्वार्द्धे बाधते पिता ॥ २ ॥
पूषादिसार्पपश्चार्द्धे जननीं बाधते शिशोः ।
पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा ॥ ३ ॥
आत्महा सन्ध्ययो र्जातो नास्ति गण्डे निरामयः ।
सर्व्वेषां गण्डजातानां परित्यागो विधीयते ॥ ४ ॥
वर्जयेद्दर्शनं यावदब्दं षाण्मासिकं भवेत् ।
तस्य शान्तिं प्रवक्ष्यामि सोममन्त्रेण भक्तिमान् ॥ ५ ॥

1B. शुक्लां वागीश्वरं चैव ताम्रपात्रसमन्वितम् ।
गण्डदोषोपशान्त्यर्थं दद्याद्वेदविदे शुचि ॥ ११ ॥

*Colophon* :—

इति गण्डजातशान्तिः ।

11.

1B. अथ दिनक्षयादिशान्तिमाह ।

*Beginning* :—

दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥ १ ॥
कालदण्डे मृत्युयोगे दुष्टयोगे सुदारुणे ।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥ २ ॥
अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य्य तत्र दैवज्ञं शान्तिं कृत्वा यथाविधि ॥ ३ ॥
यजमानो देवतानां ग्रहाणां चैव पूजनम् ।
दीपान् शिवालये भक्त्या घृतेन परिदीपयेत् ॥ ४ ॥

2B. *Colophon* :—

इति गण्डजातशान्तिः, which is evidently wrong.
It should be दिनक्षयादिशान्तिः ।

III.

Then follows Cittrajātaśānti.

*Beginning* : -

मृतत्रये मृता चेत् स्यात् नास्त्रये (?) वा मृतो यदि ।
मातृपित्रोः कुलस्यापि तदानिष्टं महद्भवेत् ॥ १ ॥
ज्येष्ठनाशो धने हानिः दुःखं वा समवद्भवेत् ।
तत्र शान्तिः प्रकर्तव्या वित्तशाठ्यविवर्जिता ॥

It goes to the end of the manuscript.

*It ends thus* :—

ब्राह्मणान् भोजयित्वा तु समहायः स्वयं भुजेः (?)
स्नात्वा तीर्थे सावरोधो स्वस्तिभागी भवेन्नरः ॥

*Colophon* :—

इति चित्रजातशान्तिः ।

## 2618.

5866. **मूलविधानपद्धतिः ।** *Mūlavidhānapaddhatiḥ.*

Substance, country-made paper. $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 9. Lines, 9 on a page. Character, Nāgara of the nineteenth century. Appearance, fresh. Incomplete at the end.

Pacificatory rites to avert the evils of the life of one born under the star of Mūlā.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ मूलविधानपद्धतिर्लिख्यते ।

तत्र प्रसवमूलनक्षत्रात् द्वितीयमूलनक्षत्रे सुस्नातः सपत्नीको यजमानः स्वाचान्तः कृतनित्यक्रियः ... ... ... ...
... ... ... ... ... ... ...
मम जातस्य बालकस्य बालिकाया वा मूलप्रथमचरणादिजनन-सूचित-पित्राद्यरिष्टशान्तिद्वारा श्रीपरमेश्वरप्रीतये सग्रहमखं मूलविधानमहं करिष्ये ।

2619

## 2319. गोमुखशान्तिविधिस्तत्प्रयोगश्च ।

*Gomukhaśāntividhi with prayoga.*

Substance, country-made paper. 9¼ × 4 inches. Folia, 3. Lines, 7, 8 on a page. Extent in ślokas, 50. Character, Nāgara of the seventeenth century. Appearance, discoloured. Complete.

The propitiatory rite held against the inauspicious influence of stars at the birth of children.

*Beginning* :—

अथ गोमुखप्रसवः ।

गार्गः ।

पित्ररिष्टे सुतारिष्टे मात्ररिष्टे तथैव च ।

प्रायश्चित्तं तदा कुर्य्यात् तत्तद्दोषस्य शान्तये ॥

The inauspicious stars :—

पूषाश्विन्योर्गुरौ सर्पे मघा चित्रेन्द्रमूलभे ।

एषु ऋक्षेषु जातस्य कुर्य्यात् गोप्रसवं तथा ॥

So Aufrecht's explanation of Gomukhaprasava—"ceremonies to be performed on a cow bringing forth a young with the face in front"—is wrong. A child born under inauspicious stars is to be placed near the mouth of a cow and it is to be considered that it had a second birth, an auspicious birth from the mouth of a cow. The cow is then to be given to a Brāhmaṇa.

1B. गोमुखं दर्शयित्वा तु पुनर्जातं तु गोमुखात् ।

विष्णुर्योनिरिति सूक्तेन गव्येन स्नपयेच्छिशुम् ॥

गवामङ्गेष्वितिमन्त्रेण गवामंगेषु संस्पृशेत् ।

विष्णोः श्रेष्ठेन मन्त्रेण गोप्रसूतं तु बालकम् ॥

आचार्य्यस्तु समादाय पश्चान्मात्रे ददेत् पुनः

*Gomukhaprasavavidhi* ends in 2B. इति गोमुखप्रसवविधिः ।

2B. Then follows its prayoga :

अथ प्रयोगः । मासपक्षाद्युल्लिख्यास्य शिशोरमुकर्क्षसूचितारिष्टशान्त्यर्थं गोमुखप्रसवशान्तिं करिष्ये ।

3B *Col.* :

इति गोमुखप्रसवप्रयोगः ।

## 2620.

1949. **अधोमुखप्रसवशान्तिः ।** *Adhomukhaprasavaśāntiḥ.*

Substance, country-made paper. 9 × 4 inches. Folia, 2. Lines, 7 on a page. Extent in ślokas, 18. Character, Nāgara. Appearance, discoloured. Complete

*Beginning* : —

अथ अधोमुखजननशान्तिः बृहच्छौनकीये ।

प्रसवे[स्तु] (तु) यदा ना(रि)[री] बालकन्तु अधोमुखम् ।
वंशारिष्टकरं चैव मातापित्रोर्विशेषतः ॥
बालकं तु परित्यज्य यावच्चूडोपकर्म्मणि ।
मातापित्रोर्विशेषेण तन्मुखं नावलोकयेत् ॥
तस्यारिष्टविनाशाय कुर्य्याच्छान्तिं यथाविधि ।
एकादशाहे द्वादशाहे तु प्रयत्नेनैव कारयेत् ॥

*Col.* : —

इत्यधोमुखप्रसवशान्तिः ।

*Post Col. in a different hand* : —

इदं पुस्तकं नारायणदीक्षित भागवत इत्युपनाम्नः ।

## 2621.

2166. **ज्वरशान्तिः ।** *Jvaraśāntiḥ.*

For the manuscript see L. 4086.

On the cure of fever by propitiatory rites to Navagraha or nine planets, as directed in Gargasaṃhitā.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ ज्वरशान्तिः । आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य अस्य रोगिणः शरीरे उत्पन्नोत्पत्स्यमानामज्वर-पित्तज्वर-श्लेष्म-ज्वरादि-सकलरोगनिरसनपूर्व्वकं सद्यः आरोग्यावाप्त्यर्थं ज्वराधि-पतिमहारुद्रप्रीत्यर्थं गर्गसंहितोक्तां सनवग्रहमखां ज्वरशान्तिं करिष्ये॥ तदङ्गगणपतिपूजनं पुण्याहवाचनाद्याचार्य्यादीन् वृणुयात्॥

*Colophon* :—

इति ज्वरशान्तिः । श्रीगजाननार्पणमस्तु ॥

## 2622.

### 2141. उलूककपोतशान्तिः । *Ulūkakapotaśāntiḥ.*

Substance, country-made paper. 9½ x 4 inches. Folia, 8. Lines, 8 on a page. Extent in ślokas, 100. Character, Nāgara. Date, Saka 1733. Appearance, discoloured. Corroded at the ends.

*Post Col.* :—

शके १७३३ प्रजापति नाम संवत्सरे पौषे मासि शुक्ले पक्षे पञ्चम्यां तिथौ भृगुवासरे तद्दिने गोपालसूनु-प्रह्लादभट्टेन लिखितं । श्रीलक्ष्मीनृसिंहचरणार्पणमस्तु ।

*The manuscript begins* :—

अथ गर्गोक्त उलूककपोतशान्तिप्रयोगः । मम गृहोपरि आस-मन्तात् उलूकवाससूचित-सकलारिष्टनिरासद्वारा अथवा मम गृहमध्ये कपोतप्रवेशसूचित-सकलारिष्टनिरासद्वारा श्रीपर-मेशप्रीत्यर्थं सग्रहमखां गर्गोक्तामुलूकशान्तिं कपोतशान्तिञ्च करिष्ये। तत्रादौ निर्व्विघ्नतासिद्ध्यर्थं गणपतिपूजनपूर्व्वकस्वस्ति-पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं ग्रहयज्ञं आचार्य्यादिवरणं करिष्ये।

3A, इति गर्गोक्त-उलूककपोतशान्तिप्रयोगः; 4A, इति नारदसंहितायां काकमैथुनदर्शनशान्तिः; 4B, इति अद्भुतसागरोक्तकाकमैथुनदर्शनशान्तिः;

6A, इति मानवसंहितायां वायसशान्तिः; 8A, इति काकमैथुनदर्शनशान्ति-प्रयोगः ।

## 2623.

9637. शान्तिपद्धतिः *Śāntipaddhatiḥ.*

Substance, country-made paper 11 × 5 inches. Folia, 9. Lines, 11 on a page Extent in ślokas, 225. Character, Nāgara. Appearance, tolerable. Complete.

On the propitiatory rite to be performed when one falls under the evil influence of a planet.

## 2624.

451. मङ्गलपूजाप्रयोगः । *Maṅgalapūjāprayogaḥ.*

For the MS. see L 1367.

*Post Col.* :—

इदं पुस्तकं वैजनाथेन ।

On the worship of the planet Mangala.

## 2625.

9941.

Substance, country-made paper. 11 × 4½ inches. Folia, 4. Lines, 8 on a page. Extent in Ślokas, 46. Character, Nāgara. Date, Saṃvat 1803. Appearance, fresh. Complete.

I.

*Beginning* :—

श्रीगणेशाय नमः ।

अथातः संप्रवक्ष्यामि गोप्रसूतेश्च लक्षणम् ।

मासानां ग्रहवाराणां शुभाशुभविचारणम् ।, etc., etc.

*Colophon* :—

इत्यनिष्टकालप्रसूतगोवडवामहिष्यादिशान्तिः ।

II.

*Beginning* :—

अथ काकमैथुनदर्शनशान्तिः ।

नारदः दिवा वा यदि वा रात्रौ यः पश्येत् काकमैथुनम् ।

स नरो मृत्युमाप्नोति ह्यथवा स्थाननाशनम् ॥

*Colophon* :—

इति काकमैथुनशान्तिः ।

*Post Colophon* :—

सं १८३ (?) अथ गोबडवादिसामग्री नवग्रहपूजनं कुम्भ १ वस्त्र १३, etc., etc.

It treats of propitiatory rites to be performed for delivery in evil moments, as set forth, of a cow, mare, she-buffalo and she-goat, and for happening to see crows in sexual intercourse.

## 2626.

9331.

Substance, country-made paper. 8½ × 3½ inches. Folia, 2. Lines, 8, 9 on a page. Extent in Slokas, 44. Character, Nāgara. Appearance, tolerable. Complete.

I.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ प्रयोगः । कर्त्ता गोमुखप्रसवं कृत्वा अद्येत्यादि एवं गुणविशेषणविशिष्टायां पुण्यतिथौ अस्य शिशोर्वैधृतौ व्यतीपाते संक्रान्त्यां चोत्पन्त्या सूचितारिष्टस्य निरासार्थं शान्तिं करिष्ये इति सङ्कल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धाचार्य्यवरणानि कुर्य्यात् ।

*Colophon* :—

इति वैधृतिव्यतीपातसंक्रान्तिशान्तयः ॥

11.

*Beginning* :—

अथ दर्शशान्तिः । अथातो दर्शजातानाञ्च मातापित्रोर्दरिद्रता तद्दोषपरिहाराय शान्तिं वक्ष्ये नारदः अद्येत्यादि ० पुण्यतिथौ अस्य शिशोर्दर्शजातस्य चोत्पत्त्या सूचितारिष्टस्य निरासार्थं शान्तिं-करिष्ये। गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धाचार्य्यवरणानि कुर्य्यात् ।

*End* :—

हिरण्यरजतं चैव कृष्णाधेनुश्च दक्षिणा । ब्राह्मणान् भोजयेत्तत्र कारयेत् स्वस्तिवाचनम् ।

*Colophon* :—

इति दर्शशान्तिः । श्रीगणेशाय नमः ।

It is a short treatise on propitiatory rites to be performed when a child is born in evil hours such as Vyatīpāta, Vaidhṛti, Saṃkrānti, the Day of the New Moon and so on. On the first leaf is written दर्शशान्ति in red ink as its name, Darśa meaning the Day of the New Moon, which is not correct.

## 2627.

2738.

Substance, country-made paper. 10 × 5 inches. Folia, 2. Lines, 14 on a page. Character, Nāgara. Appearance, discoloured

Two leaves only of a commentary on some work on the propitiation of adverse planets, etc., etc.

हिमाद्रौति : ......दोषपरिहारायोपायमाह ।

वज्रं शुक्रे १ ब्जे सुमुक्ता २ प्रवालं भौमे ३ ... ... ... ...

अथ सूर्य्यचक्रम् ; अथ शनेः ; अथ दुष्टग्रहप्रीतये दानानि ।

## 2628.

5884.

*Three short polemical tracts, on the seating of Brahmā, one of the three priests after his going round the Agni and Brāhmaṇa.*

I. Substance, country-made paper. 10¾ × 5 inches. Folia, 8. Lines, 12 on a page. Extent in ślokas, 240. Character, Nāgara. Date, Saṃvat 1950. Appearance, fresh. Complete.

The first is by Jaḍḍa Kṛṣṇa.

*Beginning* :—

श्रीगणेशाय नमः ।

केचित्तु ग्रहयज्ञादौ शान्त्यादौ च ग्रहवेदिप्रधानवेद्योः अग्रेण गत्वा अग्नेर्दक्षिणत उपवेशनं ब्रह्मणो मन्यन्ते ॥ अन्ये तु तीर्थेन विहारं प्रविश्योक्तवेद्योरग्नेश्च मध्येन गत्वाग्नेर्दक्षिणत उपवेशनमिच्छन्ति, तत्र किं युक्तमिति विचार्य्यते । तत्र सर्व्वेषु पाकयज्ञेषु पाक्षिकब्रह्मकरणं आश्वलायनसूत्रोक्तं प्रसिद्धं. करणपक्षे तत्प्रयोगाकृत्वेन अग्रेण अग्निं परीत्य दक्षिणत उपविशेदितिवाक्येन उपवेशनं प्राप्तम् ।

*Colophon* :—

इति जड्डोपाभिधकृष्णकृत-स्मार्त्तकर्म्मणि प्रथमोपवेशनार्थं ब्रह्म-गमनमार्गविचारः ।

*Post Colophon* :—

१५२२ ॥ संमत् ॥ १ ॥ ९ ॥ ५ ॥ ० ॥ १९५०

After this there are three lines, beginning :—

अत्र अग्नियजमानयोरन्तरागच्छतः प्रायश्चित्तम् । पराशर प्रायश्चित्तकाण्डे ।

II. Substance, country-made paper. 9 × 6 inches. Folia, 4. Lines, 9 on a page. Extent in ślokas, 60. Character, Nāgara. Date, Saṃvat 1950. Appearance, fresh. Complete.

*Beginning* :—

श्रीगणेशाय नमः । श्रीगुरुभ्यो नमः ।

यत्तु कैश्चित् काशीस्थनाम्ना स्मार्त्तकर्म्मणि शान्त्यादौ ब्रह्मणा ऽग्नि-देवतयोरन्तरागमननमन्तरेणैव वेदेर्दक्षिणतः उपवेशनाय गन्तव्यमिति वदद्भिः ग्रहयज्ञभुवनेश्वरीशान्त्यादिकर्म्मणि लिखितमारभ्य गार्हपत्यं विना वेदरसत्वेनापरेण गार्हपत्यमित्येव वक्तव्ये वेदिपदोपादानस्वरसेना-न्तरागमनतात्पर्य्यानुमानमित्यन्तमुक्तं । तन्मन्दं ।

*End* :—

तद्देशस्यस्याप्यग्नीशानदेश[स्थ]त्वानपायात् व्यवधानकरणे प्रमाणा-भावाच्चेति दिक् । एतद्यन्तराण्युदाहरणान्यपि हर्षापनामकगङ्गाधर-भट्टैर्महाराष्ट्रभाषया लिखितात् पत्रान्तरात् अनुसन्धेयानि ।

संवत् १९५० ॥

III. Substance, country-made paper 9 × 6 inches. Folia, 3. Lines, 9 on a page. Extent in ślokas, 40. Character, Nāgara. Date, Saṃvat 1949. Appearance, fresh. Complete.

*Beginning* :—

श्रीगणेशाय नमः ।

अविघ्नमस्तु ।

अथ ग्रहयज्ञभुवनेश्वरीशान्त्यादिकर्म्मसु ब्रह्मणाऽऽर्त्विजः तीर्थप्रवेशपूर्व्वकमग्न्यायतनस्य दक्षिणतः उपवेशनं विहितं । तत्तेन स्थापितदेवताग्न्योरन्तरेण गत्वा कर्त्तव्यमपस्थापितदेवताभ्योपि पुरतो गत्वा कर्त्तव्यम् ।

*End* :—

प्रागुदगाहवनीयात् अवस्थाय निःक्रम्य प्राङ्मुख एव भूत्वाचम्येति श्रुतिकृदुक्त्या अवस्थानदेशस्तु अग्नेरैशानदेश एव निष्क्रम्येति उक्त्या आचमनं क्वापि करोतु नाक्षतं हानिरित्यलम् ।

सं १९४९ ।

## 2629.

### 1894. नवग्रहशान्तिः । *Navagrahaśāntiḥ.*

Substance, country-made paper. 9 × 4¼ inches. Folia, 4. Lines, 10, 11 on a page. Extent in ślokas, 120. Character, Nāgara of the eighteenth century. Appearance, faded.

*It begins* :-

अथ भविष्योक्ता आदित्यशान्तिः ।

अथातः सम्प्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् ।
येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कान्तिश्च जायते ॥
सर्व्वे ग्रहाः सदा सौम्या जायन्ते येन पाण्डव ।
आदित्यवारं कृत्स्नेन पूर्व्वग्रहविचक्षणाः ॥

*Topics* :—

आदित्यशान्तिः, चन्द्रशान्तिः, अङ्गारकशान्तिः, बुधशान्तिः, वृहस्पतिशान्तिः, शुक्रशान्तिः, शनिराहुकेतुशान्तयः, अथ भविष्योत्तरे शनैश्चरव्रतम्, अथ स्कान्दे शनैश्चरशान्तिः, अथ नागरखण्डोक्ता शनैश्चरस्तुतिः ।

## 2630.

### 3891. पुष्कराशान्तिः । *Puṣkarāśāntiḥ.*

Substance, country-made paper. 15 × 3½ inches. Folia, 8. Lines, 5 on a page. Extent in ślokas, 120. Character, Bengali of the eighteenth century. Appearance, old and discoloured. Complete.

*Colophon* :-

इति पुष्कराशान्तिप्रयोगः समाप्तः ।

*Post Colophon* :—

श्रीकालीचरणे समाचला भक्तिरस्तु फाल्गुनस्य चतुर्थदिवसे सौरिवासरे समाप्तश्चायं ग्रन्थः ।

*It begins* :—

ॐ अथ पुष्कराशान्तिर्लिख्यते ।

तत्र प्रमाणम् ।

भसपादे तु नक्षत्रे भौमार्कशनिवासरे ।
भद्रातिथिसमायुक्ते त्रिपुष्कर इति स्मृतः ॥
त्रिगुणः स्यात्त्रिभिर्योगे द्वाभ्यां द्विगुण एव च
एकेनापि भवेदेको गुणस्तत्र त्रिपुष्करः ॥

तथा च वराहसंहितायां ।

पुनर्वसूत्तराषाढ़ाकृत्तिकोत्तरफाल्गुनी ।
पूर्व्वभाद्रविशाखे च षड़ेते च त्रिपुष्कराः ॥
द्वितीया सप्तमी चैव द्वादशी तिथिरेव च ।
शनिभौमौ रविश्चैव षड़ेते च त्रिपुष्कराः ॥
अस्मिं स्त्रिपुष्करादोषे शान्तिरेव न संशयः ।
पुत्रभ्रातृकलत्राणां मरणान्तु ध्रुवं स्मृतम् ॥

In leaf 2A, begins the direction for the performance of the propitiatory rite.

वाचयित्वा द्विजान् स्वस्ति ततः सङ्कल्पमारभेत् ।
दोषशान्तिविधानाय तस्यानुष्ठानमुच्यते ॥

In 2B, begins the Prayoga :—

इति वराहसंहितोक्तपुष्करशान्तिप्रमाणं समाप्तम् । अथास्य प्रयोगः ।

*Last Colophon* :—

इति पुष्करशान्तिप्रयोगः समाप्तः ।

Then a leaf contains a list of things required for the Sānti.

## 2631.

### 5112. **बाधकशान्तिः ।** *Vādhakaśāntiḥ.*

Substance, country-made yellow paper. 18 x 3¼ inches. Folia, 2. Lines, 9 on a page. Extent in ślokas, 88. Character, Bengali of the nineteenth century. Appearance, fresh. Complete.

Propitiatory rites for the cure of menstrual pains.

*Beginning* :—

ॐ गुरवे नमः ।

रक्तमांसौ च षष्ठी च डाङ्गरो जलकुमारकः ।
चतुर्विधो बाधकः स्याज्जायते ऋतुकालतः ॥
तेषां + + वक्ष्यामि यथाशास्त्रं निशम्यताम् ॥

एतेषां पूजनं कार्य्यं शनैः सन्ततिवाञ्छया ॥
निःसारणं स्थापनञ्च बलिदानं विशेषतः ।
कर्त्तव्यं गुरुवाक्येन ज्ञात्वा शास्त्रस्य लक्षणम् ॥
चतुर्विधो बाधकः स्याज्जायते ऋतुकालतः ।
व्यथा कटौ तथा नाभेरधः पार्श्वद्वये तथा ॥
रक्तमात्री प्रदोषेण जायते बाधकः स्त्रियः ।
नेत्रे हस्ते भवेज्ज्वाला मौलौ चापि विशेषतः ॥

*Colophon* :—

इति बाधकशान्तिः ।

## 2632.

### 1945. ( गर्गोक्त ) भद्राशान्तिप्रयोगः ।

*Bhadrāśāntiprayoga as directed by Garga.*

Substance, country-made paper. 10 × 4½ inches. Folium, 1. Lines, 15 in all. Extent in ślokas, 20. Character, Nāgara. Date, Saka 1765. Appearance, discoloured.

Birth in a bhadrā tithi i.e., second, seventh and twelfth days of the moon is inauspicious. The work treats of the propitiatory rites for the removal of the inauspiciousness.

*It begins* :—

श्रीगणेशाय नमः ॥

अथ गर्गोक्त भद्राशान्तिप्रयोगः ॥

शुभदिने नित्यं वैश्वदेवं कृत्वा देशकालौ संकीर्त्य अस्य शिशोः भद्राजननसूचितसकलदोषपरिहारार्थं सग्रहमखां भद्राजननशान्तिं करिष्ये । ग्रहयज्ञरहितापि भवति मूलवाक्येष्वनुक्तत्वात् ॥ गणेशपूजनादिनांदीश्राद्धान्ते आचार्य्यादिवरणं कुर्यात् ॥

*Post Col.* :—

शके १७६५ मार्गकृष्ण १० गुरौ शुद्धे रघुनाथेन लिखितं भागवत-नागादीक्षितेभ्यो दत्तं शिवः प्रीयताम् ॥

## 2633.

### 2735. ग्रहवेदी । *Grahavedī.*

Substance, country-made paper. 10¼ × 5 inches. Folium, 1. Lines, 17 on a page. Extent in ślokas, 50. Character, Nāgara of the nineteenth century. Appearance, fresh.

*It begins* :—

अथ ग्रहवेदी ।

गर्गस्योत्तरपूर्व्वेण वितस्तिद्वयविस्तृतां ।

वप्रद्वयहृतो वेदीं वितस्त्युच्छ्रायसम्मितम् ॥

संस्थापनाय देवानां चतुरस्रामुद[क्]प्लवां ॥

वितस्तिद्वयमेकहस्तमानम् ।

On the construction of altars to the planets to be propitiated.

*Topics* :—

अथ सूर्य्यपीठसाधनम्, अथ चन्द्रपीठसाधनम्, अथ भौमपीठसाधनम्, अथ बुधपीठसाधनम्, अथ गुरुपीठसाधनमाह, अथ शुक्रपीठसाधनमाह, अथ शनिपीठसाधनमाह, अथ राहुपीठसाधनमाह, अथ केतुपीठसाधनमाह ।

## 15. JYOTIṢA AS APPLIED TO SMṚTI.

### 2634.

7834. वशिष्ठसंहिता । *Vaśiṣṭhasaṃhitā.*

Substance, country-made paper. 10 × 4 inches. Folia, 126. Lines, 9 on a page. Character, modern Nāgara. Appearance, fresh. Incomplete at the end.

A very rare work of great authority on Jyotiṣa as applied to Smṛti in 45 chapters.

See I.O. Catal. No. 2995 in which Colophons I–XXXVIII, are quoted, the MS. terminating abruptly in the chapter on Pratiṣṭhā. The present MS. contains six more chapters.

98B, इति वशिष्ठसंहितायां सूरप्रतिष्ठाध्यायः; 101A, ०गुणनिरूपणाध्यायः; 107A, ०दोषनिरूपणाध्यायः; . 110B, ०गुणापवादाध्यायः; 113B, ०दोषापवादाध्यायः; 126B, (last) ०तिथिनक्षत्रवाररोगोत्पत्तिशान्त्यध्यायः ।

समाप्तोयं ग्रंथः । (?)

But according to the introduction of the book, there still remains Miśrādhyāya, the 45th chapter.

### 2635.

4300. सारसंग्रहः । *Sārasaṃgrahaḥ.*

*By Gargācārya.*

Substance, country-made paper. 11 × 5 inches. Folia, 42. Lines, 8, 9 on a page. Extent in ślokas, 1,200. Character, Nāgara. Date, Saṃvat 1944. Appearance, fresh. Complete.

This relates to Jyotiṣa as applied to Smṛti.

*Beginning* :—

श्रीगणेशाय नमः ।

नत्वा + ढुंढिराजस्य वुद्धिमानस्य हेतवे ।

बालानां सुखबोधाय कुर्व्वेऽहं सारसंग्रहम् ॥

रोहिन्युत्तररेवत्योर्मूलं स्वाती मृगो मघाः ।

अनुराधा च हस्तश्च विवाहे मङ्गलप्रदाः ॥

*Topics* :--

1A, इति विवाहनक्षत्राणि ; 2A, इति विवाहमासाः ; 2B, शूद्रादीन स्त्रियाः पुनर्विवाहः ; 3B, इति विवाहितास्त्रीगृहप्रवेशः ; 4A, इति कुलिक-योगः ; 5B, इति चुल्लीचक्रम् ; 7A, इति राशिस्वामी ; 8B, इति गुरुबलम् ; 9A, इति शुक्रोदयफलम् ; 9B, इति चन्द्रबलम् ; 10A, इति भौमफलम् ; 11A, इति श्रीसारसंग्रहे विवाहप्रकरणम् ; 11A, अथ संस्कारप्रकरणम् ; 14B, अथदाङ्गकर्म्म ; 15A, इति नामकरणम्, इति अन्नप्राशनम् ; 15B, अथ नवसङ्गमः ; 17B, अथ शतभिषास्नानम् ; 18A, इति प्रसूतस्नानम्, इति श्रीसार-संग्रहे संस्कारप्रकरणम् ; 18A, अथ यात्राप्रकरणम् ; 19B, इति ग्रामवास-फलम्, अथ व्रतबन्धे अनध्यायः : 20A, इति अमृतसिद्धियोगः, अथ ग्रहाणां फलसमयः ; 21A, इति ग्रहगोचरफलम् ; 21B, अथ शिल्पविद्यारम्भः ; 22B, अथ ग्रहणाश्मननिषेधः ; 23A, इति तिथिफलम् ; 25A, इति गृहप्रकरणम् ; 27A, अथ शस्यारोपणम् ; 27B, अथ गृहारम्भः ; 31B, अथ गृहारम्भे वृषभचक्रम् ; 32B, इति खातखननम् ; 33B, इति प्रश्नविचारः ; 33B, अथ नवान्नप्राशनप्रकरणम् ; 35B, इति अग्निचक्रम् ; 36B, इति मृत्युयोगाः ; 37A, इति ग्रहगोचरफलम्, अथ लवणक्षत्यम्, अथ सूचिकर्म्म ; 38A, इति पञ्चवार-फलम् ; 39B, अथ तड़ागचक्रम् ; 40A, अथ नवगृहप्रवेशः ; (last colophon) इति श्रीगर्गाचार्य्यकृतसारसंग्रहे सर्व्वकाज (?) (यात्रा) सिद्धिः ग्रन्थः समाप्तः ॥

*Post Colophon* :—

शुभमस्तु संवत् १८४४ मी० पौषमासे शुक्लपक्षे ११ बुधवार

श्रीराम । श्रीराम ॥

## 2636.

348. **वार्हस्पत्यम्** । *Bārhaspatya.*

For the manuscript see L. 1516.

Three different hands and two different paginations, one to 64 and the other to 59.

It is a work on Jyotiṣa as applied to Smṛti.

3B, इति वार्हस्पत्ये मुहूर्त्तविधाने गुणरूपकथनं नाम द्वितीयोऽध्यायः; 12A, ० दोषलक्षणविधानो नाम तृतीयोऽध्यायः; 19A, ० दोषापवादलक्षणाध्यायो नाम चतुर्थः; 20B, इति वार्हस्पत्ये अङ्कुरार्पणो नाम पञ्चमोऽध्यायः; 21B, इति वार्हस्पत्ये मुहूर्त्तविधाने षष्ठोऽध्यायः; 29B, ० अन्नप्राशनं समाप्तम्; 21B, (2nd pagination) ०प्रातःकालक्रियाविधानो नाम त्रयोविंशतिमोऽध्यायः; 23A, ० राज्याभिषेकः; 24B, ० देवोत्सवतीर्थगत्त्वपुण्यकालक्रियाविधानो नाम पञ्चविंशतिमोऽध्यायः; 28A, ० मातृशान्तिकालक्रियाविधानो नाम सप्तविंशतिमाध्यायः ।

The MS. is dated Saṃvat 1931.

## 2637.

5467. *The Same.*

Substance, country-made paper. 11¾ × 5 inches. Folia, 129. Lines, 11 on a page. Extent in ślokas, 2,800. Character, Nāgara. Date, Saṃvat 1937. Appearance, fresh. Left incomplete.

The date of the copying of the MS. :—

संवत् १९३७ पौषसुदी ६ वारगुरौ ।

This is a work on Jyotiṣa as applied to Smṛti.

For the beginning of the work, see L. 1516.

*Colophons :—*

3B, इति वार्हस्पत्ये मुहूर्त्तविधाने गुणरूपकथनं नाम द्वियोयोऽध्यायः; 13B, ०दोषलक्षणविधानं नाम तृतीयोऽध्यायः; 21A, ०दोषापवादलक्षणाध्यायो

नाम चतुर्थः; 22B, इति बार्हस्पत्ये अङ्गारार्यणो नाम पञ्चमोऽध्यायः; 23B, ०मुहूर्त्तविधाने षष्ठोऽध्यायः; 25A, इति बृहस्पतिसंहितायां सप्तमोऽध्यायः; 25B, इति बार्हस्पत्ये मुहूर्त्तविधानेऽष्टमोऽध्यायः; 26B, इति बार्हस्पत्ये जातकर्म्मक्रियाकालविधानाध्यायः ९; 28A, ०मुहूर्त्तविधाने नामकरणकालविधानाध्यायः; 29A, ०कर्णवेधादि शुभानां कालक्रियाविधानो नाम एकादशोऽध्यायः; 30A, ०निष्क्रमणं नामाध्यायः १२; 32A, ०अन्नप्राशनाध्यायः १३; 36A, ०चूडाकर्म्मकालविधानाध्यायः; 42A, इति बृहस्पतिसंहितायां उपनयनाध्यायः: 44B, इति बार्हस्पत्ये मुहूर्त्त [ विधाने ] विद्यारम्भादिकालविधानो नाम षोडशोऽध्यायः; 45A, इति बृहस्पतिसंहितायां मुहूर्त्तविधाने व्रतादिकालविधानो नाम सप्तदशोऽध्यायः; 49A, ०कालक्रियाविधाननामाध्यायः; 49B, इति गृहप्रवेशकालनिर्णयो नाम एकोनविंशोऽध्यायः; 62B, इति बार्हस्पत्ये मुहूर्त्तविधाने चोराखचक्रोरानिर्णयः; 72B, इति ० स्वामिदर्शनकालक्रियाविधानो नाम द्वाविंशोऽध्यायः अध्यायः; 73B, ०यात्राकालक्रियाविधानो नाम एकविंशतिमोऽध्यायः: (?) 79B, ०प्रतिष्ठाकालक्रियाविधानो. नाम त्रयोविंशतितमोऽध्यायः; 81A, ०राजाभिषेककालः; 81B, देवोत्सवतीर्थगमनपुण्यकालक्रियाविधानो नाम पञ्चविंशतितमोऽध्यायः; 82B, इति ०देवतापूजाकालक्रियाविधानं षड्विंशतितमोऽध्यायः; 83B, माहेश्वाग्निकालक्रियाविधानो नाम सप्तविंशतिमोऽध्यायः; 126B, विकीर्णाध्यायो नामाष्टाविंशतितमः।

At the end, and before the date of the copying of the manuscript, it is written :—

शेषेषासमयाः सर्व्वसंपुटः।

## 2638.

### 5466. बृहस्पतिसंहिता। *Bṛhaspatisaṃhitā.*

Substance, country-made paper. $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 67. Lines, 13 on a page. Extent in ślokas, 2,300. Character, Jaina Nāgara. Appearance, old. The last leaf has faded away. Complete. Date, Saṃvat 1585.

*Beginning* :—

स्वस्ति श्रीगणेशप्रसादात् ।

हंसोपशोभिततनुर्मुनिवृन्दवन्द्या

पापापहारिचतुरा कमलोल्लसश्रीः ।

आनन्दभूः सुमनसां मनसामशक्त-

निःशेषकल्मषनुदेऽस्तु सरस्वती वः ॥

अध्यास्य वस्वरणपीठमहेन्द्रमौलिः

स्फारस्फुरन् मणिमरीचिविराजिताङ्घ्रिः ।

देवो जगद्धिततविघ्नलताकुठारः

संसारकल्पविटपिप्रथमाधिनाथः ॥

यस्योपदेशेन कुवुद्धिसिद्धिं

सन्तर्प्य बुद्धिं समवाप्नुयाच्च ।

कृती कलावान् गुणिनश्च (?) दक्ष-

स्तस्मै नमः श्रीगुरवे च नित्यम् ॥

देवतानामृषीनाञ्च गुरुं काञ्चनसन्निभम् ।

बन्धुभूतं त्रिलोकेशं तं नमामि वृहस्पतिम् ॥

(?) स्वस्तिवाच्य + + + शकुनशान्तिकानि च ।

(?) पठेद्दिजवर्य्यैः स्थापयेत् कलसमुत्तमम् ॥

शुभं वाचयेत्प्रभवमेकमानसः

आदौ देवयुगे सुरासुरगणा सम्भग्नपात्रं स्थितं

मथानं प्रणिधाय मन्दरगिरिं नेत्रं तथा वासु(गिं)[किं] ।

मूले कूर्म्म + + + + + +

क्षीरोदं मथितुं त्रिलोकविजयप्राप्तौ समारेभिरे ॥ ५ ॥

... ... ... ... ... ...

... ... ... ... ... ॥ ६ ॥

... ... ... ... ... ...

... ... ... ... ... ...

च'न्द्रं'[ श्च ] चारुकलामयो हिमकरो हंसान्वितं पुष्पकं ।
वालश्चन्दनपारिजातकतरुः पद्मालयोच्चैःश्रवाः ॥ ७ ॥
+ +रावणकादयोम्ततयो जातं तदर्थं सुरा-
पात्रं निर्म्मिमिरे समेत्य कलसं खैः खैः कलासञ्चये ।
दोर्भ्यां तत्प्रतिगृह्य (बिभ्रतं) विलसमिदं धन्वन्तरिं नि(ि)र्ययौ
तस्याविच्छिमिमां वि[ि]रञ्चिरचितां सद्द्विजो विन्यसेत् ॥
मुखे ब्रह्मा मूले मधुरिपुरथो सो गलगतो
गङ्गा तन्मातृणां सलिलनिलया कुक्षिषु गता ।
सुरिश्रेष्ठा रेवा सरयुदुहिता जह्नुतनया
मही गोदावर्य्याश्चलसलिलपूर्णा च सरयू[ः] ॥
सिन्धुः सिन्धुचतुष्टयेन सहिता सभ्राज्ञगी गण्डकी
वर्णावाम सरस्वती भगवती चर्म्मण्व[ती](दी) कौशिकी ।
गङ्गासागरसङ्गमो वरनदः श्रोणी त्रिमूर्त्तिस्तथा (?)
तीर्थानाञ्च वटेश्वरं शिवगृहं पुण्यं प्रभासाह्वये ॥
मायापुरी वदरिकाश्रमकासिनन्दा (?)
च्छेत्रं कुरोर्गयशिरो मथुराप्रयागम् ।
गोकर्णपुष्करशनैर्मख पुण्यतीर्थं
वंशः पुनातु यजमानमवास्तरस्य ॥ (?)
यः स्नानं कलसोदकेन कुरुते भक्त्या प्रणम्य द्विजान्
तस्यापि धनपुत्रकीर्त्तिनिचयो नित्यं परं [वर्द्धते](वद्धते) ।
नारी धर्म्मरता कुटुम्बसहिता सौभाग्यसौख्यान्विता
सर्व्वे पितृमखस्य मङ्गलधरा जीवेत्समं स्वामिना ॥

16B, इति बृहस्पतिसंहितायां गुरुनारदसंवादे जलयात्राधिकारः समाप्तः ; 33A, •षोडशस्तम्भपूजाधिकारः ; 36A, •अष्टद्वारपालपूजाधिकारः ; 50B, इति ग्रहस्थापनाधिकारः समाप्तः ; 52B, इति गृह्योक्तकुशण्डिका समाप्ता ; 53B, इति वेदोक्तकुशण्डिका समाप्ता ; 55B, इति बृहस्पतिसंहितायां गुरुनारदसंवादे कलसवर्द्धनीपूजाधिकारः ; 67A, (last colophon) इति •बृहस्पतिपद्धति संपूर्णं समाप्तम् ।

*Post Colophon Statement* :—

शुभं भवतु ।

यावच्च वैष्णवो धर्म्मो लोकस्थितिदयापरः ।

तावत्सुरनदी वाच्या तावन्नन्दन्ति + + ॥

संवत् १५८५ वर्षे फाल्गुन + + + + + पूर्व्वफाल्गुनीनक्षत्रे

घटिका ६० + + + + + ज्योतिषिकवासुदेवात्मजेन + + +

वृहस्पतिपद्धतिपुस्तकं लिखितम् ।

Three lines more, completely effaced.

## 2639.

### 8190. चूडारत्नम् । *Cūḍāratnam.*

### (विवाहपटलम् *only*)

Substance, country-made paper. 17½ × 3¾ inches Folia, 40. Lines, 8 on a page. Extent in ślokas, 420. Character, Nāgara. Date, Saka 1482=1560 A.D. Appearance, old and discoloured. Complete.

A metrical treatise on marriage, being a section of what appears to be a comprehensive Smṛti compilation, entitled Cūḍāratna.

*Last Col.* :—

इति चूडारत्नग्रन्थः समाप्तः ।

*Post Colophon* :—

स्वस्ति श्रीशके १४८२ रौद्रसंवत्सरे पौषवदि अष्टमीगुरौ तद्दिने

इदं पुस्तकं लिखितं । श्रीरस्तु ॥

On the reverse side there are a few faded lines at the end of which we have the following (which has been retouched) विवाहपटल अवन्तिकाचार्य्य-वराहमिहराचार्य्यकृत चूडारत्न-नामा ।

The Maṅgalācaraṇa and the object of the work :—

श्रीगणेशाय नमः ।

नत्वा श्रीगणनाथं विलोक्य मुनिनिर्म्मितानि शास्त्राणि ।

तत् सारतरैः पद्यैः विवाहपटलं ब्रुवे श्लेष ॥

*It goes on* :—

पूर्व्वन्तु गोत्राणि विशुद्धिमत्र विचार्य्य सामुद्रिकजां प(f)र[ी]क्षां

ततश्च जन्मादिनिमित्तपूर्व्वभमेलकं दैवविदां विलोक्य ॥

समानप्रवरां कन्यां सपिण्डां चैव गोत्रजां ।

नैव तां वरयेत् प्राज्ञो मातृवत्परिकीर्त्तिता ॥

*It ends* :—

सिद्धिस्त्याज्यः शुभेर्य्ये संक्रान्तौ सुरनाड़िका । ? ।

ऋतौ द्विघ्नोऽथ वेदघ्नौ विषुवे चायने तथा ॥

2B, इति चूड़ारत्ने विवाहपटले परीक्षाध्यायः ; 3B, ०लक्षणाध्यायः ; 4B, चूड़ारत्ने प्रश्नाध्यायः ; 5A, ०शकुनाध्यायः ; 11B, ०मेलकाध्यायः ; 12B, ०विवाहमेलकाध्यायः ; 13B, ०शब्दनिश्चयाध्यायः ; 14B, ०वरणाध्यायः ; 15B, ०गुरुशुद्धिः ; 16B, ०चन्द्रबलाध्यायः ; 18A, ०मासादिशुद्धिः ; 19B, ०पञ्चाङ्ग शुद्धिः ; 20B, ०समयशुद्धिः ; 21A, ०जामित्रनिर्णयः : 23B, ०इष्टकालसाधनं : 24B, षड्वर्गशुद्धिः ; 25A, ०वेलाशुद्धिः, 26B, ०ग्रहभावशुद्धिः ; 26B, ०भावनिर्णयः ; 27B, ०तन्वादिचिन्ताध्यायः ; 28A, ०उदयास्तशुद्धिः ; 29B, ०गोरज[ः]शुद्धिः ; 30B, ०विवाहाङ्गशुद्धिः ; 31B, ०लग्नाज्ञताध्यायः ; 32A, ०घटिकाप्रतिष्ठाध्यायः ; 33A, ०सन्देहनिर्णयः ; 35B, ०गान्धर्व्वविवाहशुद्धिः ; 36B, ०विवाहशुद्धिः ; 37B, ०वधूप्रवेशाध्यायः ; 39A, ०मिश्रकाध्यायः ; 40A, (last col.) चूड़ारत्नग्रन्थः समाप्तः ।

## 2640.

### 4073. राजमार्त्तण्डः । *Rājamārtaṇḍaḥ*.

*Written by Varāhamihira and revised by Bhojadeva.*

Substance, Assamese bark. 21 × 5 inches. Folia, 99. Lines, 8 on a page. Extent in ślokas, 4,000. Character, Bengali. Date, Śaka 1645. Appearance, fresh. Complete.

See I.O. Catal. 3034 and 3035.

*Colophon* :—

इति श्रीराजमार्त्तण्डे ग्रह(जागं)[यागः] इति श्रीवराहमिहिरस्य
कृतौ पश्चाद्भोजदेवनिर्म्मित-राजमार्त्तण्डः समा(पा)प्तः ।

*Post Colophon* :—

श्रीकृष्णाय नमः हरये नमः, etc., यथादृष्टमित्यादिदोष-
परिहारः ।

बाण-वेद-ऋतु-चन्द्रे आश्विने चन्द्रवासरे ।
पुनर्वसुदिनं गत्वा सूर्य्यविप्रे लिलेखवत् ॥
नृपतिमुकुटकोट्या घृष्टपादारविन्दः
सकलविमलविद्याचक्रव[र्त्ती](र्त्ति)क(f)व[ी]न्द्रः ।
लिखतु समुललीला राजमार्त्तण्डचण्डं
जगति विदितकीर्त्ति(नृपति)[र्भूपतिः]भोजदेवः ॥

यं यमपराध इत्यादि दोषपरिहारः ।

बालब्रह्माधडाङ्के च आश्विने चन्द्रवासरे ।
सूर्य्यविप्रे लिलेख ज्ञः भानुशर्म्मा लिलेखवत् ॥ (?) ॥

*Beginning* :—

यत् शास्त्रं सविता चकार विपुलैस्कन्धैस्त्रिभिर्ज्योतिषां
तस्योच्छित्तिभयात्पुनः कलियुगे संश्रित्य यो भूतलं ।
भूयः स्वल्पतरं वराहमिहिरो व्याजेन सर्व्वं व्यधात्
इत्थं यं प्रवदन्ति मोक्षकुशलास्तस्मै नमो भास्वते ॥

There is a complete index of the work, which is transcribed below :—

१ पातल देवज्ञपूजा । २ ,, नक्षत्रविधान । ३ ,, राशिविधान । ४ ,, राशिवर्णना । ,, ,, ऋक्षपादभेद । ५ ,, क्षिसुद्धिचिन्ता । ६ ,, पुष्योत्सव । ८ ,, पुंसवनविवाह । १० ,, चन्द्रऋक्ष ? । ११ ,, गण्डयोग । १२ ,, ग्रह-दर्शनफलं । १३ ,, भावफलं । ,, ,, ग्रहभेद । १४ ,, ग्रहरवल । ,, ,, दिग्वल, चन्द्रबल, लग्नबल । १५ ,, वेश्यादियोग, वृद्धिश्राद्ध । १६ ,, नामकरणं, निष्क्रमणं । १७ ,, अमृतजलदानं, ताम्बूलभक्षणं । १८ ,, अन्नप्राशनं । १९ ,, चूड़ाकरणं ।

२० ,, कर्णभेद। २१ ,, विद्यारम्भ। २४ ,, व्रतपटलपुरुष्यतिपात मन्वन्तरा। २५ ,, विवाहवर्षशुद्धि, देशाचारशुद्धि। २६ ,, विवाहे रविशुद्धि, गुरुशुद्धि, चन्द्रशुद्धि। २७ ,, चन्द्रदोषस्नानषट्वर्गशुद्धि। २८ ,, विवाहे ताराशुद्धि, तारादोषोपशान्ति मायादिशुद्धि।

३० पातित योटनविधि दारलक्षणं, परिवेत्तिचिन्ता। ३१ ,, वैवाहिकनक्षत्रचिन्ता, नवाङ्गलग्नचिन्ता। ,, ,, हस्तोदकं वेदिकरणचिन्ता। ३२ ,, बकगुणदोषस्पष्यफलं (?)। ,, ,, गुणावहरदोषिकं विवाहपटलः। ३३ ,, उद्दराह खुद्रविवाहकुण्डलि। ३४ ,, गोधूलिकायोग। ३५ ,, दशयोगचक्रं, मनशलाकाचिन्ता। ,, ,, क्रूरगत क्रूरमध्यगतचन्द्रः, राहुयुतराहुवेधचन्द्र, जामित्रचिन्ता, जामित्रवेध, चन्द्रबलचिन्ता, ताराबलचिन्ता, तारादोषवेद। ३७ ,, दुर्गयनचिन्ता, प्रतिशुद्धचिन्ता। ३८ ,, अलङ्काराम्परिधानं, वस्त्रधारणं। ३९ ,, यात्रायाः तिथिकरणं, तुलादिप(ि)र[ी]क्षा, लग्नफल, राशिफल। ४१ ,, यात्रायां ग्रहशुद्धि। ४२ ,, दिक्बल, दिक्पतिकथनं, भङ्गयोगव्यतिपातादिदुष्टदिनं, मासफलं, यात्रायां नृपमासशुद्धि। ४३ ,, प्रस्थानयात्राविधि, गोचालनचिन्ता। ४४ ,, नौकाप्रकरणं, गजवाजिनां यात्राप्रवेशः, क्रयविक्रयत्रिगुणिनिर्णयः। ४५ पातन, अमृतयोग, दग्धयोग, ककचयोग, उत्पातयोग। ४६ ,, कालयोग, यमघण्टयोग, शुभयोग, योगफलं, नक्षत्रग्रहवेधः। ४७। ,, नवग्रहदोषस्नानं, महास्नानं वस्त्रधारणं, गजवाजिरोहणं। ४८। ,, धनुर्व्वेद, नाडीनक्षत्रदोषचिन्ता, ग्रहणे नाडीनक्षत्रदोषस्य, स्नानपूजाग्रहणे तारादोषप्रशान्ति। ४९। ,, वारिलक्षणम्। ५१। ,, वास्तुलक्षणम्। ५२। ,, गृहारम्भविधि, गृहप्रवेश। ५३। ,, ग्रहवर्णचिन्ता। ५५। ,, प्रतिष्ठाविधि, कूपखननविधिः, दौलप्रतिष्ठाविधि, ऊर्द्धानिनादिनक्षत्रं। ५६। ,, करिदन्तकल्पनं, अश्वमुण्डनं, गजवाजिदमनं, कृषिकर्म्मं। ५७। ,, नवान्नफलभक्षणं, गजमुक्तिस्नानं। ,, ,, नक्षत्रदुर्घितचिन्ता, नक्षत्रपादशुद्धि। ५८। ,, क्रूरग्रहचिन्ता, भद्रकथनम्। ५९। ,, अर्द्धप्रहरिका, जन्ममासादिविहितं शयनासनभोगादिचिन्ता, भोगार्थस्नानं। ६०। ,, हरिगुरुचिन्ता, गुर्व्वादित्यादिस्थवस्था। ६१। ,, गुरुशुक्रास्तचिन्ता, वराहवचनं, बाल्य, वृद्ध, सन्ध्या, गुरुशुक्रचिन्ता, शुक्रस्योदयनिरूपणं, गुरुचाण्डालियोगचिन्ता। ६३। ,, हिराषाढ़चिन्ता। ६४। ,, व्यहस्पर्श। ६५। ,, अमावास्यानिर्णयः, पूर्णिमा-

निर्णयः, विष्णुशयनोत्थानं । ६६ । ,, मनसोत्थानं, उपाकर्म्म । ६७ । ,, अर्घमन्त्र, दानमन्त्र, शयनमन्त्र, पारणामन्त्र, स्नानमन्त्र । ६८ । ,, रोहिण्यष्टमीव्रतं । ६९ । ,, एकादशीनिर्णयः, सङ्कल्पवाक्यम् । ७० । ,, एकादशीव्रतग्रहणनियमः, समम्यामर्कव्रतं । ७२ । ,, शक्रध्वजोत्थानं, खञ्जरीटदर्शनं, अनन्तव्रतं । ७३ । ,, बुधाष्टमी, वृषोत्सर्गं, वर्षवृद्धि, जन्मदिनशुद्धि, श्रवणाद्वादशी, सावर्णिनिर्णय । ७४ । ,, । अम्बुवाचि, हरितालिचतुर्थी, तस्याः शान्तिः, अत्र मन्त्रः । ७५ । ,, अगस्तिपूजा । ७७ । ,, दाक्षायणनक्षत्राणि । ७८ । ,, परपक्षश्राद्धं । ७९ । ,, स्थापनदुर्गोत्सव । ८० । ,, निराजनविधि । ८१ । ,, कोजागरविधि । ८२ । ,, सुखरात्रि, भातृद्वितीया, कार्त्तिकाकाशदीप, कार्त्तिकस्नान, पाषाणचतुर्थी । ८३ । ,, क्षेत्रपूर्णिमा, पुष्याभिषेकस्नानं, माघस्नानं, वरचतुर्थी, श्रीपञ्चमी, माघी-सप्तमी, भीष्माष्टमी । ८४ । ,, महामाघी, अनन्तव्रतं फाल्गुनाशोकाष्टमी । ८५ । ,, चैत्रावली, पिशाचीचतुर्द्दशी, महावारुणी । ८६ । ,, युगाद्या युगान्त दशहरा, चम्पकचतुर्द्दशी । ८७ । ,, पञ्चतपः, सावित्रीव्रतं, स्वनामद्वादशीव्रतं, शिवरात्रिव्रतम् । ९० । ,, संक्रान्तिनिर्णयः, दिनक्षय— ९२ । ,, नक्षत्रगुण । ९३ । ,, वारगुण, बलगुण, । ९४ । ,, विवाहे प्रश्नसमये शुभाशुभज्ञानं, प्रश्नचिन्ता, अरिसनभयोग, प्रणभसिरायोग, वश्रियोग, नक्षत्रसल्कं, तिथिसल्क, योगसल्क, प्रेतनक्षत्र, देवनक्षत्र, योगवलावलचिन्ता । ९५ । ,, शुभग्रहादन्वज्जल्यादनिष्ट-व्यवस्था । ९६ । ,, गुर्व्वादित्यादि व्यवस्था । ९७ । ,, ग्रहनिरूपणं । ९८ । ,, चातुर्म्मास्यव्रतं, त्रिरात्रव्रतं । ९९ । ,, काम्यादिकर्म्म, ग्रहजागनिरूपणञ्च ।

There are two pieces of bark to protect the MS., on one of which the following is written :—

श्रीरामः वन्धकपत्रमिदं साकिम धिङ्ध्यावाला खस्ने दुयो केठे श्रीतर्क-चन्द्र सभापति तव नाइ । ... ... ... ... ... १

वजा रूप ११) रूप १) आधलि लइ आमि दुयोभाइ अग्रेटावैइ साकिम ... २

यदि घर नदगा वाजकथो मूलोरकातेविषा जमिम् इति सक १७१२ ता० ५ आश्विन ... ... ... ३

इस्याद अत्रार्थे चाखिर नामुधिं १ कलाधिं १ ... ... ४

तबं धिं १ बाऊलधि १ वृद्धव मुडवमिरावदुधिं १

मधुकलिता १ कठतिवलोराम १ ... ... ... ५

On the back of the other piece (blank) we have :—

१७१२ शाके । १७ आश्विनं ४॥ टाका एइ पुस्तकर मूल्य ।

After this there are some names :—

श्रीद्विजवर सम्मा १ । श्रीमधुसाद सम्मा १ । श्रीवगावरा १ । श्रीसत्य-मद्दाजेरिका १ । अदद्वेटियावरा १ । श्रीजुराइवरा १ । श्रीवमियावरा १ । श्रीचारं कंधवांवरा १ । श्रीधनिराम खादा १ । श्रीनिधान राम खानचा । श्रीवक्षुम्माकाकड़ि १ वापुटि काकनि १ ।

## 2641.

6449. *The Same.*

Substance, country-made paper. 11⅜ × 3⅜ inches. Folia, 116. Lines, 6, 7, on a page. Extent in ślokas, 1,980. Character, Nāgara. Date, Saṃvat 1711. Appearance, old and discoloured. Complete.

*Last Colophon* :—

इति श्रीराजमार्त्तण्डं समाप्तं ।

*Post Colophon* :—

संवत् १७११ समय पौषवदि त्रयोदश्यां बुधवासरे मलदग्रामे दामोदरेण लिखितमिदं पुस्तकम्—

यादृशं, etc., etc.

It relates mainly to Jyotiṣa as applied to Smṛti. Bhojadeva of Malwa appears to have compiled an encyclopedia, under the title of Rāja-Mārtaṇḍa, embracing the subjects of medicine, Jyotiṣa and the philosophies of Yoga and Vedanta.

*It begins* :—

श्रीगणेशाय नमः ।

यच्छास्त्रं सविता चकार विपुलैः स्कन्धैस्त्रिभि र्ज्योतिषां
तस्योच्छित्तिभयात् पुनः कलियुगे संहृत्य यो भूतलम् ।
भूयः स्वल्पतरं वराहमिहिरव्याजेन शास्त्रं व्यधात्
इत्थं यं प्रवदन्ति मोक्षकुशलास्तस्मै नमो भास्वते ॥

पूर्व्वाचार्य्यमतेभ्यो य + + लघुस्फुटा + बीजम् ।
उद्धृत्य त्वाह्निकमहं रहस्यमभ्युद्यतो वक्तुम् ॥
वैद्यः पुरोहितो मंत्री दैवज्ञश्च चतुर्थकः ।
प्रातष्काले + + + श्रियमिच्छता ॥
पुरोधा गणको मंत्री वैद्यश्चापि चतुर्थकः ।
एते राज्ञा सदा पोष्याः कृच्छ्रेणापि स्त्रियो यथा ॥

...

...

2A. ज्योतिषे मंत्रवादे च सिद्धान्ते वेदकर्म्मणि ।
अर्थमात्रं तु गृह्णीयान्नापशब्दं विचारयेत् ॥
आदित्यः सविता सूर्य्यो भास्करोऽर्क्को दिवाकरः ।
तिग्मांशुस्तपनो भानुः सहस्रांशुः प्रभाकरः ॥
शीतांशुश्चन्द्रमाः सोमो मृगाङ्कोन्दुर्निशापतिः ।
शीतरश्मिर्निशानाथः शशाङ्कः शशलाञ्छनः ॥, etc., etc.

2B, ग्रहाभिधानम्; 3B, नक्षत्राभिधानचिन्ता; 4A, राशिसंज्ञा; 4B, प्रतिराशिनक्षत्रव्यवस्था; 5A, स्त्रीशुद्धिचिन्ता, पुष्पस्नानम्; 6A, बालबंधः; 7A, निषेकाः, घटीबंधः; 9A, पुंसवनम्; 9B, जातकारिष्टचिन्ता; 11A, ग्रहदर्शनादिचिन्ता; 11B, षड्वर्गफलम्; 12A, भावफलम्; 13A, ग्रहभेद-चिन्ता, अरिष्टभङ्गः; 13B, ग्रहाणां बलाबलचिन्ता; 14A, ग्रहाणां मित्रारिष्ट-चिन्ता; 14B, एवं जातकः समाप्तः; 15B, नामकरणम्, निष्क्राशनं; 16B, ताम्बूलभक्षणम्; 18A, अन्नप्राशनम्; 23B, चूडाकरणम्; 24B, कर्णवेधः, विद्यारम्भः; 28B, विवाहे वर्षशुद्धिचिन्ता; 29B, विवाहे रविशुद्धिः; 30A, विवाहे गुरुशुद्धिः; 31A, अष्टवर्गशुद्धिः; 32B, चन्द्रशुद्धिचिन्ता; 33B, विवाहादौताराशुद्धिः; 34A, विवाहादौ मासशुद्धिः; 38A, विवाहपटलम्; 39B, दशयोगचक्रम्; 41B, मित्रचन्द्रप्रशंसा; 42B, ताराबलचिन्ता; 43B, नववधूगमनम्; 44B, शंखादिधारणचिन्ता; 45B, वस्त्रपरिधानम्; 46B, यात्रायां तिथिकरणचिन्ता; 47A, यात्रायां वारफलम्; 48B, यात्रायां नक्षत्र-गुणचिन्ता; 49B, लग्नचिन्ता; 52B, व्यतीपातादिदोष + + + + +

54A, इति समस्तराजचक्रचूडामणि–महाराजाधिराज–श्रीभोजदेवविरचिता राजमार्त्तण्ड + विवेचने-ज्योतिःशास्त्रयात्राप्रकरणम्; 55B, ताराप्रायश्चित्तम्; 61A, गृहाद्यर्चाविधिः; 61B, गृहप्रवेशः; 64B, प्रतिष्ठाविधिः, कूपखनन-विधिः; 67A, क्षौरकरणम्; 67B, नवान्नभक्षणम्; 68A, रोगमुक्तिस्नानम्; 69A, शयनासनादिभोज्यचिन्ता; 70B, भद्राचिन्ता; 71B, योगबलचिन्ता, शुभग्रहानुकूलानि इत्यलमथवस्था: 72B, जन्ममासादौ विहिताविहितचिन्ता; 73A, सिद्धियोगाः; 73B, अमृतादियोगचिन्ता, दग्धातिथिः; 74A, नैमित्तिके योगचिन्ता, क्रयविक्रयचिन्ता; 74B, तिथ्यादिश्रवणफलम्; 75A, तैलसेवनम्, भोगार्थस्नानविधिः; 75B, वाधकनक्षत्रचिन्ता, यमघण्टयोगः, काणयोगः; 76A, व्यतीपातसम्भवादियोगचिन्ता, वैधृतियोगचिन्ता; 76B, सिंहस्थबृहस्पति-चिन्ता; 77A, गुर्वादित्यचिन्ता; 77B, गुरुशुक्रास्तचिन्ता; 78A, बालवृद्ध-संध्यादिदोषचिन्ता; 82B, पुरुषलक्षणम्; 83B, स्त्रीलक्षणम्; 85B, ग्रह-वक्रातिचारचिन्ता; 87A, द्विराषाढ़ादिचिन्ता; 88A, तिथिपूजानियमः; 90B, एकादशीनियमः, सप्तम्यर्कव्रतनियमः; 92A, उपाकर्म: 92B, युगादिः; 93B, अगस्त्यार्घ्यनविधिः, श्रवणद्वादशी, बुधाष्टमी; 95A, रोहिण्यष्टमी; 97B, शक्रध्वजोत्थानविधिः, अनन्तव्रतम्; 100A, अपरपक्षादि; 101B, आकाशप्रदीपदानविधिः; 102A, प्रेतचतुर्दशी, सुखरात्रिकाविधिः; 102B, भ्रातृद्वितीया, कार्त्तिकस्नानविधिः; 103A, कार्त्तिकीयोगः; 103A, माघस्नानम्, वरचतुर्थी, श्रीपञ्चमी: 103B, माघीसप्तमी, भीष्माष्टमी, फाल्गुनी; 104A, अशोकाष्टमी; 104B, वारुणीत्रयोदशी; 105A, महाज्येष्ठादिविधिः; 105B, दशहराविधिः, सावित्रीव्रतम्; 106A, अरण्यषष्ठी, आगन्तुव्यतीपातः, आगन्तुकार्त्तिकीयोगः, महाविषुवयोगः; 106B, ग्रहणफलम्, प्रतिपद्रोहिणी-योगाः; 108A, संक्रान्तिनिर्णयः, दिनक्षयफलम्; 109A, कालमानम्, ग्रहाणां राशिवस्थानम्, कन्याप्रदानम्; 109B, अथ विवाहः; 111B, नवग्रही; 112B, खञ्जरीटदर्शनम्, दन्तकाष्ठे तिथिनिषेधः; 113B, नक्षत्रे जातिस्नानम्; 114A, शनैश्चरराशिगमनदोषचिन्ता; 115A, राशिवर्षचिन्ता।

*It ends*:—

पौष्णाश्विमूलाश्वमूलसहिता प्रायानवावोत्तरा
मौलाख्यानि वणाहकानि वक्त + थ्यासाम्बुवाहान्तरम्।

संपन्ना धनधान्य-गोकुलजना स्फीता भवेन्मेदिनी
रत्नन्तरसभाग्य(?)विक्रयवणिक् पार्थिवकं वाक्यगो ॥ (?)
नक्षत्रमण्डलम् ॥
ग्रन्थाणां + + मणि ॥ १६१४८३ तेन विद्वद्देकुल विस्तृत्तं
२००४२७ भूमिकाम्यम् ॥ १७५६४४ धर्म्मपालवर्षं २०

It quotes Satyācārya in 51A.

## 2642.

3701. **शुद्धिदीपिका** । *Suddhidīpikā.*

*By Mahīntāpanīya Srīnivāsa.*

Substance, country-made paper. 15½ × 3 inches. Folia, 69. The MS. has come to the last stage of decay. Lines, 4 on a page. Character, Bengali. Date, Saka 1622. Complete

*Beginning* :—

दृष्यातरङ्गदुस्तर संसाराम्भोधिलङ्घने तरणिः, etc., etc.

*The Last Colophon* :—

इति महीन्तापनीय-सत्पण्डितश्रीश्रीनिवासविरचितायां यात्रा-
निर्णयो नाम अष्टमोऽध्यायः ।

Mahīntā was one of the villages in the Rāḍha Country. Mahīntāpaniya means the village-head of Mahīntā. These villages were granted to the descendants of the five Brāhmaṇas brought to Bengal by Adi Sura in 734 A.D.

*Post Colophon* :—

समाप्तश्चायं ग्रन्थः ।
शुभमस्तु । शकाब्दाः १६२२ ।
+ + + + सिते पक्षे द्वाविंशाहेति यत्नतः ।
नमस्कृत्य महादेवं व्यालेखि पुस्तकं मया ॥

The leaf marks have all been obliterated at the beginning and at the end.

For the work see L. 325 and Oxf. 336B.

Printed in Calcutta.

*It ends* :—

मृतस्य देवलोकादिनिर्णयः, etc., as in I.O. Catal. No. 3007.

His Ganitacūḍāmaṇi was composed in 1158 A.D. See Cat. Cat. Vol. I. p. 671. He is quoted by Halāyudha. See H.P.R. Notices Vol. XI p. 13.

## 2643.

214. *The Same.*

Substance, country-made paper. 17 × 4 inches. Folia, 17. Lines, 4 on a page. Extent in ślokas, 1,000. Character, Bengali. Date, Śaka 1711 Appearance, tolerable. Complete.

*Post Col. Statement*:—

श्रीहरिनारायणशर्म्मणः स्वाक्षरमिदं पुस्तकञ्च ।

शुभमस्तु शकाब्दाः १७११ ।

## 2644.

723. *The Same.*

Substance, Tāḍipattra. 13 × 1¼ inches. Folia, 91. Lines, 3 on a page. Extent in ślokas, 1,000. Character, Bengali. Appearance, old and worm-eaten. Complete.

See L. 325 and Oxf. 336B.

## 2645.

3637D. *The Same.*

Substance, country-made paper. 3 × 2½ inches. Folia, by counting, 5. Lines, 6 on a page. Character, Bengali of the eighteenth century. Appearance, discoloured and worn out.

A fragment of Mahīntāpanīya Śrīnivāsa's Śuddhidīpikā. It contains the following colophon :—

इति मध्यीकापनीय-सत्पण्डित-श्रीश्रीनिवासविरचितायां शुद्धिदीपिकायां नामकरणादिशुद्धौ सप्तमोऽध्यायः ।

It contains two stray leaves.

## 2646.

3580. **अर्थकौमुदी ।** *Arthakaumudī.*

*A commentary on Śrīnivāsa's Śuddhidīpikā, by Govindānanda Kavikankan ācārya.*

Substance, country-made paper. 16·2 x 2·6 inches. Folia, 127. Lines, 6 on a page. Extent in ślokas, 4,500. Character, Bengali. Date, Saka 1544. Appearance, faded. Writing mostly effaced. Complete.

Govindānanda wrote a complete code of Smṛti about 40 years before Raghunandan in the Bankura District. The entire code has been printed in Bibl. Ind.

*Colophon* :—

इति श्रीगोविन्दानन्दकविकङ्कणाचार्य्यकृतायां शुद्धिदीपिका-टीकायामर्थकौमुद्यां + +ध्यायोऽष्टमः समाप्तः । समाप्तेयं टीका ।

*Post Colophon* :—

× × × × × श्रीराधाकृष्णचरणे मम भक्तिरस्तु । शकाब्दाः १५४४ ॥ श्रीरस्तु ॥ शिवं भवतु ॥

After this, there is recorded in a later hand the birth of a son of one Candraśekhara.

ॐ शुभमस्तु शकाब्दाः १५६१ शौरज्यैष्ठस्य चतुर्विंशतिवासरे कृष्णपक्ष नवमीतिथौ मेषलग्ने मीनराशिस्थिते चन्द्रे श्रीचन्द्रशेखरदेवशर्म्मणः पुत्रोऽजनि श्रीदामोदरदेवशर्म्मेति मलमासनिमित्तं साविश्रीपुरतः इदानीं सावित्रीपूर्व्वम् ।

There are also figures shewing the positions of the planets at the time of the birth of the child.

For Suddhidīpikā, an original treatise on the proper times for religious ceremonies, see I.O. Catal. No. 3007, and for its commentary Arthakaumudī, see I.O. Catal. No. 3010.

## 2647.

5601A. *The Same with the same commentary.*

Substance, palm-leaf. 15 × 1¼ inches. Folia, 30 (by counting). Lines, 4 on a page. Character, Udiya, about a century and a half old. A mere fragment.

16B,* इति श्रीगोविन्दानन्दकविकङ्कणाचार्य्यकृतायां शुद्धिदीपिकाटीकायामर्थकौमुद्यां प्रथमोऽध्यायः ।

Then begins the second which is not complete.

## 2648.

5603B. *The Same with the same commentary.*

Substance, palm-leaf. 14½ × 1½ inches. In Tripāṭha form. Character, Udiya, about a century old. Appearance, old and worm-eaten.

Both the text and the commentary are incomplete. The commentary goes up to the end of the 2nd adhyāya and the text to the end of the 4th adhyāya. Of the 5th there are 45 verses from the beginning, then the manuscript breaks off.

See the previous number.

## 2649.

8109. **शुद्धिदीपिकाटीका ।** *Suddhidipikāṭīkā.*

*By Kṛṣṇānandacārya.*

Substance, country-made paper. 12 × 3 inches. Folia, 223. Lines, 6 on a page. Extent in ślokas, 5,352. Character, Bengali. Date, Saka 1608. Appearance, discoloured. Complete.

*Last Col.* :—

इति श्रीकृष्णानन्दाचार्य्यविरचिता शुद्धिदीपिकाटीका समाप्ता । समाप्तश्चायं ग्रन्थः ।

*The Post Col.* :—

नागाश्वतर्कधरणीपरिसङ्ख्यशाके श्रीचन्द्रशेखरशर्म्मणा लिखितं स्वार्थमिति ।

माता च वामरी तस्य पिता तस्य च वामरः ।
कायस्थेन लिखितं पुस्तकं यो हरेन्मम ॥

*Beginning* :—

श्रीगणेशाय नमः ।
प्रणम्यासारसंसारपारावारतरिं हरिं ।
कृष्णाचार्य्यो वितनुते दीपिकायाः प्रभामिमां ॥
ग्रन्थारम्भे निर्विघ्नपरिसमाप्तिकामाः सदाचारपरम्परानुमितवेद-
बोधितकर्त्तव्यताकं मङ्गलमाचरन्ति । तदयमपि श्रीनिवासपण्डितो
ज्योतिषशास्त्रमधिकृत्य तस्य च भगवतः श्रीसूर्य्यस्य संकीर्त्तनरूपं
कुर्व्वन् अध्यापकस्य अध्येतुश्च अनुसम्मतोपि मङ्गलनिर्व्वाहाय
क्रियमाणदीपिकाख्यग्रन्थादौ निबध्नन्नाह हरणेति ।

*It ends* :—

धीराः परोपकृतये धृतदेहभाराः
भूमौ निपत्य चरणेषु निवेदये वः ।
टीकेयमुत्पथगतापि + +
प्रेमार्द्रदृष्टिकणिकाभिरवेक्षणीया ॥

## 2650.

6587-I. **कर्म्मप्रकाशः ।** *Karmaprakāśaḥ.*

*By Śrīnātha.*

Substance, palm-leaf. 18¼ × 1½ inches. Folia, 6. Lines, 4 on a page Character, Bengali of the eighteenth century. Appearance, old and discoloured. A mere fragment.

An authoritative work of the school of Bengal, on Jyotiṣa, as applied to Smṛti.

See L. 2923.

*Beginning* :—

श्रीगणेशाय नमः ।
नत्वा दिनेशं शिवमादिदेवं
संग्रह्य च ज्योतिषपुस्तकानि ।

श्रीनाथशर्म्मा विदधाति यत्नात्
कर्म्मप्रकाशं बहुदोषनाशं ॥

On the obverse of the first leaf :
श्रीकाशीरामशर्म्मणा स्वपुत्रार्थं क्रीतमिदं पुस्तकं ।

## 2651.

5650. **तिथिविवेकः ।** *Tithivivekaḥ.*

*By Padmanābha Upādhyaya.*

Substance, palm-leaf. 13½ × 2 inches. Folia, 1 to 55 of which the leaves marked 5, 6, 9, 23, 26, 36, 46, are missing. Lines, 5, 6 on a page. Extent in ślokas, 1,000. Character, Newari Appearance, very old.

*The work begins* :—

ॐ नमः शिवाय ।
नमस्कृत्य महादेवं गुरुं संसार[तारणं](सागरं) ।
तिथ्यादीनां विवेकार्थं मुनिवाक्यसमुच्चये ॥
पक्षवृद्धौ तिथिवृद्धौ क्षामवृद्धिषु संशयं ।
सुधियामप्यनुष्ठानं + + + ॥

For the work see my Nep. Cat., Vol. I, p. 184 and pref. p. xvi.

It is clear from the present manuscript that Tithiviveka forms part of a larger work of Yogīśvara, called Kālaviveka (24B, इति योगीश्वरसमुच्चिते कालविवेके तिथिविवेककाण्डं संक्रान्तिविवेकः क्रियते) and that Padmanābha wrote the last chapter on funeral rites, as a supplement to Yogīśvara Saṃgraha which ends in the present manuscript in leaf 38B, (योगीश्वरसंग्रहः समाप्तः). Then follows Padmanābha's work on Pretakṛtya and Śrāddha. 39A, अथ मृतप्राणिदायादोक्तिविधिं प्रवक्ष्यामि ।

Two verses from मन्देहानेकगम्भीरं are common to both the manuscripts (the present MS. and that described in

Nep. Cat.). But the verse preceding them is different. The Nep. Cat. MS. has the following Colophon which is wanting in this.

इति तिथ्यादिनिर्णये योगीश्वरसंग्रहे प्रेतकृत्यनिर्णये पद्मनाभसंग्रहयोः समुच्चयः समाप्तः ।

From this rather obscure passage it appears that Padmanābha has two works as supplementary to Yogīśvara Saṃgraha.

Last Colophon in the present manuscript runs :—

श्रीवाराणस्यामुपाध्यायपद्मनाभेन रचितं ।

इति तिथिविवेकः समाप्तः ।

Although called Tithiviveka, it treats of funeral rites.

The authorities quoted are :—

1A, ऋष्यशृङ्गः; 2A, मत्स्यः; 2B, कात्यायनः; 3A, विष्णुः; 3B, विष्णुधर्म्मोत्तरे; 7A, स्कन्दपुराण, जाबालिः; 7B, प्रचेताः, बौधायनः, हारीतः, वायुपुराणम्; 8A, बृहस्पतिः, अत्रिः, वृद्धपराशरः, शङ्खः; 8B, कार्ष्णाजिनिः; 11A, देवीपुराणम्; 12B, भविष्ये; 13A, लिङ्गपुराणम्; 17A, वराहपुराणे, विष्णुधर्म्मे; 17B, ब्रह्मपुराणम्; 18A, विष्णुपुराणे; 22A, षट्त्रिंशन्मतात्; 24A, वशिष्ठः, स्मृतिसमुच्चयः, व्यासः, मनुः; 25B, शातातपः; 30B, मरीचिः; 33B, ब्रह्माण्डपुराणम्; 34A, बौधायनः, प्रजापतिः; 35B, दक्षः; 36B, जातुकर्णः, शाट्यायनः; 38A, धौम्यः; 40B, शाकटायनः, बृहत्प्रचेताः; 42A, जैमिनिः, पारस्करः, याज्ञवल्क्यः, वार्त्तिककारः; 42B, यमः; 43A, अङ्गिराः, हारीतः; 43B, भृगुः, पुलस्त्यः; 44A, मार्कण्डेयः; 44B, गर्गः, वृद्ध-शातातपः; 45A, देवलः; 45B, व्याघ्रः; 47B, वृद्धप्रचेताः, स्मृतिसंग्रहः; 48A, संवर्त्तः, शौनकः; 49A, कात्यायनः, हारीतः; 51A, वृद्धवशिष्ठः, बादरायणः; 52A, आपस्तम्बः ।

There are two stray leaves at the end of the MS. marked 24 and 25. In 24B, we have quotations from Mudgala and Uśanāḥ.

## 2652.

10728A. **योगीश्वरसंग्रहः ।** *Yogīśvarasaṃgrahaḥ.*

**(तिथिनिर्णयः) ।**

Substance, palm-leaf. 7 × 2 inches. Folia, 26. Lines, 5, 6 on a page. Extent in ślokas, 312. Character, Newari of the eighteenth century. Appearance, discoloured. Complete.

An old and authoritative work on Jyotiśa, as applied to Smṛti, quoted by Hemādri and Madhava.

*Beginning* :—

ॐ नमो भगवते वासुदेवाय ।
नमस्कृत्य सहस्रांशु[ं](ः) सुरासुरनमस्कृत[ं](ः) ।
व्यवहारोच्चयं वक्ष्ये व्यासादिमुनिसम्मतम् ॥
नमस्कृत्य महादेवं गुरुं संसारतारणं ।
तिथ्यादीनां विवेकार्थं मुनिवाक्यसमुच्चितम् ॥
सिद्धिमार(?) प्रकुरुते सरकादीविधानि च (?) ।
सर्व्वसंग्रहशास्त्राणां मुनिवाक्यसमुच्चयं ॥
तदुक्तं ज्योतिःशास्त्रेण ॥
सौरमासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्ये च चान्द्रमासः प्रशस्यते ॥

*It ends* :—

एतानि श्राद्धकालानि मित्राण्याह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
... ... ...

*Last Colophon* :—

इति श्रीयोगीश्वरसंग्रहे श्रीतिथिनिर्णयः समाप्तः ।

*Post Colophon* :—

शुभमस्तु सर्व्वदा । शुभ १ श्रावणमास ।

## 2653.

1568. धर्म्मरत्नम् । *Dharmaratnam.*

*By Jīmūtavāhana.*

For the manuscript see L. 1974.

After the colophon there is recorded, in a different hand, the date of the birth of one Ghaṭakasiṃha Banerjee's son, as Śaka 1417, which curiously enough Rajendralāla took for the date of the manuscript. The birth-record is to be found in the facsimilé of the last leaf of the manuscript, in Plate II. L. Vol. V. The MS. is earlier than the record.

शुभमस्तु शकाब्दा १४१७ आषाढ़स्य चतुर्थे दिवसे रात्रौ दण्डमस्य प्रथमांशे षष्ठ्यां शतभिषा कुम्भराशौ चन्द्रे वन्द्यघटीयश्रीघटकसिंहस्य शुभकुमारो जातः ।

The work has been published in Bibl. Ind. in the preface to which a clear account of both the MS. and the work is to be found and the date of the work is determined as a little later than 1091 A.D.

## 2654.

6394. त्रिविक्रमशतकटीका । *Trivikramaśatakaṭīkā.*

*By Gopīnātha with the text.*

Substance, country-made paper. 9¼×4 inches. Folia, 32. Lines, 9 on a page. Extent in ślokas, 650. Character, Nāgara. Date, Saṃvat 1690. Appearance, old and discoloured. Complete.

Text :—

A century of verses relating to Jyotiṣa as applied to Smṛti. Described by Eggelling in Catal. No. 2884.

Comm. :—

चेतो गोपालचरणयुगले निवेश्य गोपीनाथेन ।
टीका त्रिविक्रमशतस्यैषा बुधवल्लभा क्रियते ॥

इह ग्रन्थारम्भसमये शिष्टाचारपरिप्राप्ततया त्रिविक्रमार्यो निर्विघ्नसमाप्तिसिद्ध्यर्थं स्वेष्टदेवतानमस्काररूपं मङ्गलं कृत्वान्वयिष्वर्थं निबध्नाति ।

प्रणिपत्य परं ब्रह्म गणकेन्द्रस्त्रिविक्रमः ।
मुनिप्रणीतमखिलं व्यवहारं प्रवक्ष्यति ॥

*It ends* :—

Comm. त्रिविक्रमार्योऽस्य व्यवहारस्य स्वकृतिसम्बन्धित्वमाह :—

Text. नारायणस्य तनयो ब्राह्मणोदक्षानुजो द्विजः ।
त्रिविक्रमः शतश्लोकी-र्व्यवहारमनुं व्यधात् ॥

समाप्तः ।

किंचित् कलियुगे जाते गते ब्रह्मा त्रिविक्रमम् ।
\+ \+ \+ \+ \+ संक्षेप शास्त्रमेतत् मया कृतम् ॥

*Colophon* :—

इति श्रीज्योतिर्विद्-गोपीनाथविरचिता त्रिविक्रमशतटीका समाप्तिमगात् ।

*Post Colophon* :—

संवत् १४६० समये वैशाख सुदि द्वतीया ॥
श्रीसिद्धेश्वर्य्यै नमः ॥ श्रीराम सत्य ।

## 2655.

### 10442. कालादर्शः । *Kālādarśaḥ.*

*By Aditya Bhatta (also called Kavivallabha) pupil of Viśreśvara.*

Substance, country-made paper. 10 × 3¼ inches. Folia, 25. Lines, 9–11 on a page. Extent in ślokas, 600. Character, Nāgara of the seventeenth century. Appearance, old and discoloured. Complete.

A rare and authoritative work on the proper times, for religious observances, quoted by Madhavācārya in his Kālamadhava, Raghunandana and others; while the latest authorities it quotes are Smṛticandrikā, Aparārka and Kalpataru.

*Colophon* :—

इति श्रीमदादित्यसूरिविरचिते कालादर्शे यज्ञकालः । समाप्तोयं कालादर्शमूलग्रन्थः ॥

*Post Colophon* :—

शाके १००५७ (?) मन्म(म)थनामसंवत्सरे शिवपुर्यां कालादर्शाख्योयं ग्रन्थः विष्णुभिक्षोचिणात्मजेन लिखितोयं स्वार्थे परोपकारार्थे ॥ शिवप्रसादात् कल्याणदो भवतु ॥

See L. 2489 and I.O. Catal. 1655. Bik. p. 399. Madras No. 3114.

The first two verses of maṅgalācaraṇa, as quoted by Rājendralāla and the 6 verses at the end, as quoted by Eggeling, which mention the authorities consulted in this work, are wanting in the present manuscript.

These authorities are :—

विज्ञानयोगी (perhaps विज्ञानभिक्षुः) विश्वरूपाचार्य्यः, स्मृतिमहार्णवः, विश्वादर्शः, नित्यादर्शः, मदनः, स्मृतिचन्द्रिका, अपरार्कः, कल्पतरुः, शिवस्वामिमतम्, बालरूपः, स्मृतिरत्नम्, मञ्जूषा, स्मृतिसंग्रहणम्, धर्मप्रदीपः, कारणागमः। In another place mention is made of षट्त्रिंशन्मतम् ।

Eggeling says as Kālamādhava quotes this work [see Bible Ind. Ed. p. 83] it must have been written prior to the middle of the 14th century. The author describes himself in the third verse as the pupil of Viśveśvara Cārya. This Viśveśvara may be the Paṇḍit who helped Madanapāla of Kāṣṭhā, who also belonged to the same century, in his Madana Pārijāta.

## 2656.

### 5846. तिथिनिर्णयः । *Tithinirṇayaḥ.*

*By Ananta Bhaṭṭa.*

Substance, country-made paper. 9 x 5½ inches. Folia, 4 to 91. Lines, 13 on a page. Extent in ślokas, 1,800. Character, Nāgara. Date, Saṃvat

1441 or A.D. 1385. Appearance, old, discoloured and worn-out. Incomplete in the beginning. Foll. 42–69 are missing.

On the lunar days and the religious duties appertaining thereto.

As to the age of the author, the date of the present MS gives some idea.

*End* :—

अयं तिथिनिर्णयः शिवरहस्ये तिथिनिर्णयाध्याये प्रोक्तो नापूर्व्वः इति तिथिनिर्णयः समाप्तः ।

निर्णया बहवः सन्ति तिथ्यादीनां गृहे गृहे ।
अनिर्णयास्तु ते सर्व्वे न वक्तुं तत्त्वतः क्षमाः ॥
निर्णयोयं कृतः सर्व्वो भट्टानन्तेन धीमता ।
अज्ञानानां प्रबोधार्थमवृष्ट्यार्थं तथैव च ॥

इति अनन्तभट्टः समाप्तः ।

*Post Colophon Statement* :—

शिवमस्तु सर्व्वजगतः । मङ्गलं भूयात् । स्वस्ति संवत् १४४१ वर्षे पौष वदि १५ अमावास्यायां तिथौ बुधदिने ॥ + श्रीनन्दपद्रमण्डलकरणे तिलकवाडाग्रामे भट्टनागरज्ञातीय पण्डितसरवणसूनु नारायणः तिथिनिर्णयमनन्तभट्टनामानं व्यलीखत् ॥ शुभं भवतु लेखकपाठकयोः ॥

Besides the Purāṇas, it often quotes Harihara as in fol. 84A :—

पण्डितहरिहरेण उदयास्तमयग्रन्थाभ्यामर्द्धोदितार्द्धास्तमितरूपः कालो गृह्यत इत्युक्तम् ।

## 2657.

### 5998. *The Same.*

Substance, country-made paper. 9¼ × 4 inches. Folia, 10, of which the second is missing. Lines, 11 on a page. Extent in ślokas, 250. Character, Nāgara. Date, Saṃvat 16(?). The hand-writing is of the early nineteenth century. Appearance, discoloured. Fr.

Defective in the beginning.

*Beginning* :—

श्रीगणेशाय नमः ॥

अथ संक्रान्तिसम्बन्धेन विहितप्रतिषिद्धानां कर्म्मणां कालो निर्णीयते

तत्र देवीपुराणम् ।

द्वादशैव समाख्याताः समाः संक्रान्तिकल्पनाः ।

सप्तधा सा तु बोद्धव्या एकैकेव यथा शृणु ॥

In the last number, the chapter on Saṃkrānti, the portion contained in the present MS., covers foll. 80–91. The MSS. differ only in the concluding verses.

9A, इति संक्रान्तिनिर्णयः ।

अथ मन्वादियुगादिषु निरूपयिष्यते ।

मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्य्ययोः ।

व्यतीपाते च वैधृत्यां तत्कालव्यापिनी क्रिया ॥

*It ends* :—

अयं तिथिनिर्णयः शिवरहस्यतिथिनिर्णयाध्यायेप्युक्तो नापूर्व्वः ॥

ग्रन्थबन्धसुवर्णानां सदोत्कर्षापकर्षयोः ॥

प्रमाणं विदुषां बुद्धिर्निर्म्मला कषपट्टिका ॥

यदस्ति निश्चितं किञ्चित् नीरक्षीरमिवाल्पकम् ।

अपक्षपातिनः सूरिहंसाः स्वीकुर्व्वते स्वयम् ॥

मीमांसेन्दु-कलाप्ररूढ़-विततप्रज्ञा-सुधाबिन्दवो

न्यायाख्या विलसन्ति यस्य वचने पातञ्जले यो जलम् ॥

सामुद्रतुरगौ मुखानिवदयां (?) नाम्ना त्वनन्तो गुरुः

सोयं निर्णयमाततान विविधं लोकस्य मोहापहम् ॥

*Colophon* :—

इति श्रीअनन्तभट्टोपाध्यायविरचितः तिथिनिर्णयः समाप्तः ।

*Post Col.* :—

शुभं भवतु । श्रीदिग्विजयीन्द्रसिंहाय नमः । संवत् १९ । चे पञ्चा समये माधवदी द्वितीया रवौ लिखितमिदं पुस्तकम् । श्रीबदरीनाथो जयति ।

## 2658.

### 1265. कालनिर्णयदीपिका । *Kālanirṇayadīpikā.*

*By Rāmacandrācārya.*

Substance, country-made paper. 12¾ × 4¼ inches. Folia, 16. Lines, 12 on a page. Extent in ślokas, 600. Character, Nāgara. Date, Saṃvat 1738. Appearance, old. Generally correct. Complete.

For the beginning and end of the work see L. 2281 and I.O. Catal. No. 1659.

The work seems to be of the nature of a commentary in verse, for the author says:

प्रपञ्च्यते स्वशब्देन मूलग्रन्थानुसारतः ।

and his son the commentator speaks of his father as bringing down कालनिर्णयकदुग्धसुधाब्धिमारम् ।

So there was a work, Kālanirṇaya, which is amplified in this work.

According to Prof. Bhandarkar, (Report for 1883–84, pp. 58–60) Rāmacandra who is also the author of the Prakriyā Kaumudī lived in A.D. 1450. But the weak point in his argument is that he takes Rāmacandra in रामचन्द्राचार्यसुत-सुत-सुत to be Rāmacandra the author. He gives no reason for taking the great grandfather of the scribe to be the author. The Āndhradeśa was annexed to the Bahamani dominions by Ahmed Shah in 1424, by destroying Oḍaṅgala, its capital, and killing Pratāparudra, its king. So the Rājā Rama mentioned in Kālanirṇaya would be an impossible personage at that time. Prof. Bhandarkar thinks that this king Rāma must have been a king of Vijayanagara. But this is Andhradeśa and not Karṇāṭa. Colebrooke, on the other hand, puts down the author in 1243 A.D., in his Miscellaneous Essays, Vol. II, new edition, p. 333, from some statement in Kālanirṇaya Dīpikā itself.

*Colophon* :—

इति कालनिर्णयदीपिका श्रीरामचन्द्राचार्य्यकृता समाप्ता ।

*Post Colophon Statement* :—

इति श्रीमनोहरेण लिपाठिनालेखि देवदत्तादर्थमिति संवत् १६३८ मासे फाल्गुनेऽर्के तिथौ बुधवासरे । शुभोऽस्तु तेषामिति ।

On the reverse side of the last leaf commences a work on तिथिनिर्णय by Vaidyanātha Jyotirvid who summarises in the work the opinions of Vijñānesvara, Yogī, Ananta Bhaṭṭa, and Bhoja Rāja. Vaidyanātha's work is quoted in Camatkāra Cintāmaṇi.

## 2659.

2032. *The Same.*

Substance, country-made paper. 10 × 4½ inches Folia, 20 Lines, 11 on a page. Extent in slokas, 550. Character, Nāgara of the eighteenth century. Complete.

For a description of the work see L. 2281 and I.O. Catal. No. 1659.

## 2660.

5752. **कालनिर्णयदीपिकाविवरणम् ।**

*Kālanirṇaya-dīpikāvivaraṇam.*

*By Nṛsiṃha, the son of Rāmacandra.*

Substance, country-made paper. 8½ × 4 inches. Folia, 223. Lines, 8 on a page. Extent in slokas, 3,000. Character, Nāgara. Date, Saṃvat 1716. Appearance, discoloured. Complete.

For the work see I.O. Catal. No. 1660.

*Colophon* :—

इति श्रीमत्सर्वशास्त्रज्ञ-सकलमहागमाचार्य्य-परमहंस-परिव्राजक श्रीगोपालगुरुपूज्यपाद-शिष्यरामचन्द्राचार्य्यसुत-नृसिंहाचार्य्यकृतं कालनिर्णयदीपिकाविवरणं समाप्तम् ।

*Post Colophon Statement* :—

शुभमस्तु। कल्याणमस्तु। श्रीगोपीजनवल्लभो जयतु।

संवत् १७ आषाढ़ादि १६ वर्षे आषाढ़मासे शुक्लपक्षे चतुर्दश्यां तिथौ गुरुवासरे लिखितमिदं कालकौमुदिकाविवरणं लेखकपाठकयोः शुभमस्तु॥

## 2661.

10619. **समयप्रदीपः।** *Samayapradīpaḥ.*

*By Śrīdatta.*

Substance, country-made paper. 10 × 5 inches. Folia, 56. Lines, 9 on a page. Extent in ślokas, 1,600. Character, Nāgara. Date, Saṃvat 1817. Appearance, discoloured. Complete.

*Last Colophon* :—

इति श्रीमहामहोपाध्यायश्रीदत्तकृते समयप्रदीपे प्रकीर्णकः परिच्छेदः तृतीयः।

*Post Colophon* :—

समाप्तोऽयं समयप्रदीपाख्यो ग्रन्थः।

संवत् १८१७। लिखितं काश्यां मध्य मणिकर्णिकाश्रमीपे। गङ्गायै नमः।

This refers to the proper times for the performance of the Vratas.

See I.O. Catal. No. 1683, L. 1935, Bik. p. 452.

The author was a Maithila and is quoted by Vācaspati Miśra, Rudradhara, Raghunandana and others, while he himself quotes Harihara and Gauḍa Smṛti.

## 2662.

3604. **कृत्यरत्नाकरः।** *Kṛtya-ratnākaraḥ.*

***The first section of a general digest of Hindu law, compiled under the direction of Caṇḍeśvara, son of Vīreśvara, and minister of king Hara Siṃha Deva of Mithilā.***

Substance, palm-leaf. 13 × 2 inches. Folia, 160. Lines, 6 on a page. Extent in ślokas, 3,900. Character, Bengali. Date, L.S. 392. Appearance, old and worn-off. Complete in 160 leaves of which the leaves 14, 15, 17 to 39 and 62 to 99 are missing.

*Colophon* :—

इति सप्रक्रियमहासान्धिविग्रहिकठक्कुरश्रीवीरेश्वरात्मजसप्रक्रियमहासान्धिविग्रहिकठक्कुर–श्रीचण्डेश्वरविरचिते कृत्यरत्नाकरः समाप्तः ।

*Post Colophon* :—

श्रीरस्तु । लसं ३९२ प्रथमवैशाख वदौ ९ शुक्रे ववम्भौलिग्रामे लिखितमिदं पुस्तकमिति ।

See I.O. Catal. Nos. 1387–90.

The authorities quoted :—

3B, विश्वामित्रः, आपस्तम्बः; 4A, हारीतः; 4B, भविष्यपुराणम् and कालिकापुराणम्; 5A, वृहस्पतिः, नारदः; 6B, विष्णुः, दानवृहस्पतिः; 7A, महाभारतः; 7B, देवीपुराणम्; 8A, तैत्तिरीयस्मृतिः, वशिष्ठः, गौतमः; 9A, कपर्द्दिभाष्यम्, मनुवशिष्ठयमाः; 13A, देवलः, पारस्करः; 13B, गोभिलः, वृद्धशातातपः, योगियाज्ञवल्क्यः, वृद्धवशिष्ठः, वृद्धमनुः, लघुहारीतः; 40A, मत्स्यपुराणम्; 54B, आग्नेयपुराणम्; 59B, ब्रह्मपुराणम्; 61A, वराहपुराणम्; 103A, विष्णुधर्म्मोत्तरे; 116A, विष्णुपुराणम्; 127B, आदित्यपुराणम्; 137A, स्कन्दपुराणम्; 142B, पद्मपुराणम् ।

After the verse 13, quoted in I.O. Catal. No. 1387 there are the following verses omitted by Eggeling :—

यद्यात्रा चतुरङ्गिनी भरनमद्भूगोलघातस्फुटद्
भोगीन्द्राग्रशिरःफणामणिपतत्खण्डप्रदीपांशुभिः ।
पाताले निविडान्धकारपटलीनिर्म्मोकनष्टप्रिया-
स्तत्कीर्त्तिस्तवगलब्धलोचनकला गायन्ति भोगिस्त्रियः ॥
नेपालं गिरिदुर्गमं तु भवनादुन्मूल्य तद्भूपतीन्
सर्व्वान् राघववंशजानरिरिपोः तुल्यप्रतापानवैः ।

देवं विश्ववरप्रदं पशुपतिं संस्पृश्य योऽप्यपूजत्
केषां नैष धरातले स्तुतिपदं मन्त्रीन्द्रचण्डेश्वरः ।
एतेनातिवदान्यमौलिमणिना सम्मानितैरर्थिभि-
र्दत्तानेकमनोरथाधिकमहादानोदितेरुज्झितः ।
भङ्गश्रेणिमसीमलीमसतनुच्छायः स कल्पद्रुमः
प्रश्च्योतन्मकरन्दविन्दुनिवहव्याजेन रोरुद्यते ॥
उन्मीलत्महकारसौरभमिलद्भृङ्गौघभङ्गारिणो
विप्रेभ्यः स्वरपत्तनप्रणयिने वित्तारतः श्यामलाः ।
\+ \+ \+ \+ \+ उन्निद्रशालिश्रिय-
स्ते दत्ताः कति न प्रसन्नमनसा मन्त्रीश्वरेणामुना ॥
अयमुदन्वीरवनत्तरलमालतलङ्घनया
धनविवर्त्तिनोर्म्मिनिमग्नामपरेऽप्य मरः ।
दिवि शरदभ्रविभ्रमपयःपटलोदरग
स्फुरदरविन्दरेणुविलसदनिन्द्यमसितम् ॥
एतत्कीर्त्तिजिगीषुरीशमभजत् देवः सुधादीधितिः
प्रायः शेखरतामवाप न पुनस्तस्मादसौ तत्फलम् ।
इत्येवं गलिते मनोरथभरे पङ्कच्छटामोदरं
धत्ते निर्ज्जितकान्तिरन्तरधिकं शङ्के कलङ्कम् शशी ॥

## 2663.

### 6557. तिथिनिर्णयः । *Tithinirṇayaḥ.*

*By Caṇḍeśvara.*

Substance, country-made paper. 9 × 4½ inches. Folia, 26. Lines, 11 on a page. Character, Nāgara of the early eighteenth century. Appearance, old and discoloured and repaired. Incomplete at the end.

*Beginning* :—

स्वस्ति । श्रीगणेशाय नमः । श्रीअच्युताय नमः ।

ॐ नमो भगवते वासुदेवाय ।

स्वेच्छ्विभावितः (?) ग्रेषभेदभिन्नाय (स)[ग्र]ब्भवे ।

कालो विधिबलदर्ग्रपूर्णमास्यादिकर्म्मसु ॥

3B, इति तिथिनिर्णये चक्रेश्वराचार्य्यविरचिते सर्व्वग्रास्त्रानुमते तिथिभेदत्रयं प्रसिद्धम् ॥

## 2664.

### 9329. माधवी कारिका । *Mādhavī kārikā.*

Substance, country-made paper. 9 × 4½ inches. Folia, 11. Lines, 8 on a page. Extent in ślokas, 160. Character, Nāgara. Appearance, tolerable. Verse. Complete. Date, Saṃvat 1872. Illegibly written

*It begins thus* :—

श्रीगणेशाय नमः । राम ।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे

यं नत्वा क्लतक्लत्याः स्युस्तं नमामि गजाननं । १

सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परं

मज्जन् स[ज्ज]नसङ्गतीर्थनिपुणः सद्वृत्ततीर्थाश्रयात् ॥

लक्ष्मीमाकलयन् प्रतापलहरीं श्रीभारतीं तीर्थतः (?)

विद्यातीर्थमुपाश्रयं हृदि भजे श्रीकण्ठमव्याहतं । २

This generally goes under the name of Kālamādhava kārikā, printed in pp. 1-28 of the printed edition of Bibl. Ind. of Kālamādhava.

सत्यैकव्रतपालको द्विगुणधी+र्यो चतुर्वेदिता

पञ्चस्कन्धक्लति + + + वृङ्सङ्गाङ्ग सर्व्वं सहः ॥

अष्टव्यक्तिकलाधरो भवनिधिः पुष्यद्दशप्रत्ययः (?)

स्मार्त्तोदायधुरन्धरो वि(नी)जयते श्रीवक्कणक्ष्मापतिः ॥

*Colophon* :—

इति माधवक्लता कारिका सम्पूर्णा । समस्त । संवत् १८७२ पौषवदी अमावास्या शनिवासरे जानमाथमिश्रेण लिख्यते ।

## 2665.

10262. *The Same.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 6. Lines, 10 on a page. Character, Nāgara of the nineteenth century. Appearance, fresh.

A fragment with leaves marked with the letters का॰ मा॰.

ईदृशं नियमं न्याये विपरीतमिमेवम: ।

6B, तमेव निर्णयं शास्त्रन्यायाभ्यां कर्तुमुद्यतः ॥ १३० ॥ [ इयमेवग्रन्थ-कारिका ] ॥

## 2666.

521. *The same (here called)* कालनिर्णयः । *Kālanirṇayaḥ.*

*With an anonymous commentary.*

A mere fragment noticed in L. 1298.

The text has been printed in Bibl. Ind.

The comm. is left unnoticed by Rājendralāla.

*It begins thus*:—

श्रीगणेशाय नमः ॥

उपोद्घात इति ॥ प्रथमे वादे सांख्यमतमाश्रित्य कालग्रन्थ-वाच्यः कश्चिदर्थो नास्तीति पूर्व्वपक्षीकृत्य वैशेषिकादिमतमाश्रित्य तत्सत्त्वं साधितं ॥ इत्यादि ।

## 2667.

8852. कालमाधवव्याख्या । *Kālamādhava Vyākhyā.*

*By* उमा ।

Substance, country-made paper. 13¼ × 5¼ inches. Folia, 19. Lines, 10 on a page. Character, modern Nāgara. Appearance, fresh.

The leaves end with एतेन निबन्धानुपयोगात्तन्निर्णय इति शैषिका-चुकाराणां अपास्तं । अन्य कालानां ।

*It begins :—*

श्रीमाधवं गुरुं नत्वा लक्ष्मीलक्ष्मीशिशुप्रभुः ।
खेरडे मुद्गलापत्यगणेशापत्यकृष्णकः ॥
महादेवः सुतस्तस्य वेदमूर्त्तिर्जटान्तवित् ।
श्रौतस्मार्त्तार्थनिपुणो दीक्षितो राजपूजितः ॥
पत्नी यस्य + [र] मारूपा साऽभ्युमा तस्य कन्यका ।
कालमाधवसद्व्याख्यां तनुते सर्व्वसंविदे ॥

## 2668.

### 2942. कालमाधवीयकारिकालघुविवरणम् ।

*Kālamādhavīyakārikā-Laghuvivaraṇam.*

Substance, country-made paper. 10 × 4½ inches. Folia, 19. Lines, 9 on a page. Extent in ślokas, 405. Character, Nāgara of the early nineteenth century. Appearance, discoloured. Complete.

*Colophon :—*

इति कालमाधवीयकारिकालघुविवरणम् ।

The MS. contains, with the text of the kārikās on Mādhavācārya's Kālanirṇaya, an anonymous gloss on difficult points.

For the text see W. p. 331.

The gloss begins :—

जन्यकालेऽब्दमुख्यत्वमुक्तमेतच्चतुष्टयमिति प्रथमे वादे सांख्यमतमाश्रित्य कालशब्दवाच्यः कश्चित् पदार्थो नास्तीति पूर्व्वपक्षीकृत्य वैशेषिकादिमतमाश्रित्य तत्सद्भावः साधितः ॥ द्वितीये तस्य कालस्य ज्योतिःशास्त्रादिसिद्धत्वात् अनिर्णेयत्वमाशङ्क्य कर्म्माङ्गत्वाकारेण तत्प्रसिद्ध्यभावात् निर्णेयत्वं दर्शितं। इत्यादि ।

## 2669.

5517. **कालमाधवकारिकाविवरणम् ।**

*Kālamādhavakārikāvivaraṇam.*

*By Mādhavacārya himself.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 11. Lines, 11 on a page. Extent in ślokas, 260. Character, Nāgara of the nineteenth century. Appearance, fresh. Complete.

*It begins thus* :—

श्रीगणेशाय नमः ।

स्वीयश्लोकविवरणं माधवाचार्य्यनिर्म्मितम् ।

किम्वदन्तीमिति श्रुत्वा लिख्यते बालतुष्टये ॥

उपोद्घात इति । प्रथमे वादे सांख्यमतमाश्रित्य कालशब्दवाच्यः कश्चिदर्थो नास्तीति पूर्व्वपक्षीकृत्य वैशेषिकादिमतमाश्रित्य तत्सत्त्वं साधितम् । द्वितीये तत्कालस्य ज्योतिःशास्त्रप्रसिद्धत्वात् अनिर्णेयत्वमाशङ्क्य कर्म्माङ्गत्वाकारेण तत्प्रसिद्धत्वाभावान्निर्णेयत्वं दर्शित-मित्यादि ।

*End* :—

तदेवं निर्णीतमर्थं संग्रहेण अनुक्रम्य उपसंहरति ईदृशमिति ।

*Colophon* :—

इति श्रीमाधवाचार्य्यकृतं स्वीयकालनिर्णयश्लोकविवरणं सम्पूर्णम् ।

## 2670.

10263. **लघुमाधवीविवृतिः ।** *Laghu-Mādhavī-Vivṛtiḥ.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 11. Lines, 10 on a page. Character, Nāgara of the nineteenth century. Appearance, fresh.

*Col.* :—

इति धर्म्मशास्त्रे लघुमाधवी सविवृतिः ।

*Beginning* :—

श्रीगणाधिपतये नमः ।

अथ टीका । उपोद्घातेति । प्रथमे पादे साङ्ख्यमतमाश्रित्य काल-शब्दवाच्यः कश्चिदर्थो नास्तीति पूर्व्वपक्षीकृत्य वैशेषिकादिमत-माश्रित्य तत्सत्त्वं साधितं । द्वितीये तु तस्य कालस्य ज्योतिःशास्त्र-प्रसिद्धत्वात् अनिर्णेयत्वमाशङ्क्य कर्म्माङ्गत्वाकारेण तत्प्रसिद्ध्या तान्नि-र्णेयत्वं दर्शितम् । तृतीये कर्म्मणां उपक्रमोपसंहारयोश्चिन्तनीय-त्वेन नित्यकालस्य कर्म्माङ्गत्वं दर्शितं ।, etc., etc.

This is a comment on the portion of Kālanirṇaya, contained in number 2665 leaving out the introductory verses; it is called Laghu Mādhavī.

## 2671.

### 5551. कालमाधवकारिकाव्याख्या ।

*Kālamādhavakārikāvyākhyā.*

*By Vaidyanātha Bhaṭṭa, son of Tatsat Rāmacandra Bhaṭṭa.*

Substance, country-made paper, $9\frac{3}{4} \times 5\frac{1}{4}$ inches. Folia, 41. Lines, 9, 14 on a page. Extent in ślokas, 720. Date, Saṃvat 1990. Character, Nāgara. The leaves from the 30th to the end have been newly restored. Complete.

*The commentary begins thus* :—

श्रीगणेशाय नमः ।

नत्वा गजाननं देवमगजानन्दवर्द्धनम् ।

कालमाधवपद्यानि विवरिष्ये यथामति ॥

See H.P.R. Vol. III, 56.

*Colophon* :—

इति श्रीमद्धर्म्मशास्त्रपारावारीणतत्सद्रामचन्द्रभट्टात्मजभट्टवैद्य-नाथभट्टसूरिकृते कालमाधवीयव्याख्याने पञ्चमं प्रकरणं सम्पूर्णम् ।

*Post Colophon* :—

संवत् १९९० । पौष-वदी द्वादशी भृगुः ।

## 2672.

8853. कालमाधवलक्ष्मीः । *Kāla Mādhava Lakṣmīḥ.*

*A commentary on* कालनिर्णय, *by Lakṣmī Debī, the wife of Vaidyanātha Pāyaguṇḍa.*

Substance, country-made paper. 13½ × 5½ inches. Character, Nāgara. Appearance, fresh. Date, Saṃvat 1856.

The last two parts, each separately paged.

The part beginning with तृतीयप्रकरणं क्रमप्राप्तमारभते ॥ अथेति ॥ is complete in 106 leaves, ending with इति दशमीनिर्णयः ।

The last one, complete in 120 leaves, begins:

अथैकादशीनिर्णयः ॥ शिष्यावधानाय प्रतिजानीते अथेति ।

*The Col. runs thus:—*

इति श्रीमत्पायगुंडोपाख्यवैद्यनाथार्द्धाङ्गलक्ष्मीदेवीविरचित-काल-माधवलक्ष्मीः परिपूर्णा । शुभं समाप्तं । संवत् १८५६ ।

There are also leaves, apparently belonging to the same work, (*a*) marked 1–7. (*b*) 1, 2, 7, 8, 10–19 and (*c*) 3–10 treating of seasons, months and intercalary months.

## 2673.

6374. ज्योतिःसारसागरः । *Jyotiḥsārasāgaraḥ.*

*By Kīrtikara.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 3–32, of which foll. 8–18, 21, 22, 24, 28 are missing. The second side of fol. 3 (3B) and the first side of fol. 29 (29A) are also gone. (Two leaves pasted together had been made one through out.) Character, Nāgara of the eighteenth century. Appearance, old and discoloured.

A mere fragment on Jyotiṣa as applied to Smṛti.

29B, इति श्रीमत्कीर्त्तिकरकृते ज्योतिःसारसागरे प्रश्नसंज्ञादिनिर्णयो नाम प्रथमस्तरङ्गः ।

See Ulwar Extr. 486. In the beginning, the work mentions Māṇḍavya, Garga, Lalla, Varāha, and Bhoja, as its authorities; while in Aufrecht's Cat. Cat. Vol. I, a work of the same title (Jyotiḥsārasāgaraḥ) has been entered (without however the author's name), and described as quoted in Madanapārijāta.

Besides the ancient authorities, it quotes :—

5B, राजमार्त्तण्डः, भीमपराक्रमः, रत्नमाला; 19A, दीपिका; 25A, सारावली।

## 2674.

5461. **तिथिनिर्णयसारः।** *Tithinirṇayasāraḥ.*

*By Madana Pāla.*

Substance, country-made paper. $9\frac{1}{4} \times 4\frac{1}{2}$ inches. Folia, 77. Lines, 10 on a page. Extent in ślokas, 1,200. Character, Nāgara of the eighteenth century. Appearance, old and discoloured and mouse-eaten on the right-hand side. Complete.

*Beginning* :—

श्रीगणेशाय नमः।

यद्यपि सन्ति धरित्र्यां परः शताः सूरिमण्डलीरचिताः।
तिथिनिर्णयास्तथापि स्फुटप्रदिष्टोऽत्र निर्णयो यत्ने॥
न खलानुद्दिश्य मया विहितोऽत्र विनिर्णये परिश्रमः।
न खलु कदाचिन्मधुनः सखञ्जं विजह्राति दुःसहं गन्धम्॥
श्रुतिस्मृतिपुराणानि पर्य्यालोच्य यथामति।
तिथिनिर्णयसारोऽयमुद्धृतः प्रथतां भुवि॥

तत्र प्रथमं तावत् सामान्येन सर्व्वतिथिषु निर्णयः प्रस्तूयते॥
तत्र द्विविधा तिथिः। शुद्धविद्धभेदात्॥

*Last Colophon* :—

इति श्रीमदनपालविरचितः तिथिनिर्णयसारः समाप्तः।

5A, इति श्रीकट्टारमल्लेत्यादिविरुदराजी विराजमान-श्रीमदनपालविरचिते तिथिनिर्णयसारे सर्व्वधर्म्मसाधारणयुग्मतिथिनिर्णयः; 9A, ०एकभक्तादिसर्व्व-

तिथीनां साधारणो निर्णयः : 21A, ०अष्टमीनिर्णयः ; 27B, ०एकादशी-निर्णयः : 32B, ०श्रवणाद्वादशीनिर्णयः ; 33A, ०त्रयोदशीनिर्णयः : 36A, ०अमावास्यापूर्णिमानिर्णयः : 39A, ०तिथिवेधः : 52A, ०पितृश्राद्धश्राद्ध-विधिनिर्णयः । अतः परं दर्शपूर्णमासेष्टिकालो निरूप्यते ।

The authorities consulted are :—

8B, स्कन्दपुराणम् ; 9B, पैठीनसिना ; 10B, विष्णुधर्म्मोत्तरः ; 11A, ब्रह्मवैवर्त्तः ; 12A, शिवरहस्यसौरपुराणयोः ; 12B, हृद्यमः ; 13B, देवी-पुराणम् ; 19B, सम्वर्त्तः ; 21A, पद्मपुराणम् ; 21B, नारदीयपुराणम् ; 22B, देवलस्मृतिः ; 24A, गोभिलः ; 25B, वायुपुराणम् ; 29A, नारदः, कूर्म्मपुराणम् ; 30A, भविष्यपुराणम् ; 32B, भविष्योत्तरः ; 33B, शङ्खस्मृतिः ; 34B, विष्णुधर्म्मः ; 36B, निगमः ; 41B, मत्स्यपुराणम् ; 50B, मनुः ; 74B, जावालस्मृतिः ।

As regards the author's age, it is known that his Madanapāla-vinoda-nighaṇṭu, a vocabulary of materia medica was composed in 1375.

## 2675.

### 5515. व्यवहारसमुच्चयः । *Vyavaharasamuccayah.*

*By Upādhyaya Śrīpati.*

Substance, country-made paper. 9 × 3½ inches. Folia, 94 of which the eighteenth leaf is missing. Lines, 7 on a page. Extent in ślokas, 2,000. Character, Nāgara of the eighteenth century. Appearance, old and soiled. The writing on the first leaf has been effaced.

A work on Jyotiṣa, as applied to Smṛti. It was known in quotation only by Raghunandana in his Tithi-tattva.

*It ends thus* :—

एकराशौ य(f)द[ा] जीवमन्दौ स्यातां तदा मही ।
दुर्भिक्षव्याधिशोकार्त्ता भवत्यानन्दवर्ज्जिता ॥
मन्दे चापे युवत्यश्वमिथुनेऽप्य वृषे तथा ।
तावत् पृथ्वी रणव्याधिदुर्भिक्षभयपीडिता ॥

*Colophon* :—

इत्युपाध्यायश्री(सी)पतिविरचितायां ज्योतिःशास्त्रे व्यवहारसमुच्चये समाप्तमिति ॥

The authorities quoted and consulted :—

5A, देवीपुराणे; 6A, बादरायणः, गर्गः; 6B, वशिष्ठः, हारीतः; 7A, वशिष्ठः; 13B, व्यासः; 38A, मत्स्यपुराणम्;

## 2676.

5587. **स्मृतिसारसंग्रहः** । *Smṛtisārasaṃgrahaḥ.*

*By Viśvanātha.*

Substance, palm-leaf. 15 × 1½ inches. Folia, 70. Lines, 4, 5 on a page. Extent in ślokas, 2,200. Character, Udiya, about 200 years old. Appearance, old. Complete.

*Beginning* :—

ॐ नमो विश्वेश्वराय ।

मन्वादिशास्त्राणि गुरोरधीत्य
सम्यक् तथाभ्यस्य चिरं यथार्थम् ।
दृष्ट्वा च शिष्टाचरणं चकार
श्रीविश्वनाथः स्मृतिसारसंग्रहम् ॥

अथ प्रमाणतः सिद्धं तावत् चोदनाया धर्मे प्रामाण्यम् ।
तन्मूलत्वात् स्मृतिपुराणानामपि प्रामाण्यं सिद्धम् ।

There is an index to the work in three leaves, which is given below :—

१, अयननिर्णयः; अथ वत्सरनिर्णयः; २, अथ अयननिर्णयः; ऋतुनिर्णयः; ३, अथ मासनिर्णयः; अथ एकभक्तनिर्णयः; ४, अथ नक्तनिर्णयः; ५, अथायाचितं निरूप्यते; अथ तिलं निर्णीयते, अथ शुद्धतिलनिर्णयः; अथ विद्धतिलनिर्णयः; ६, अथ तिथ्युपभागमाह, अथ द्वैधतिथिनिर्णयः; अथ खण्डतिथिनिर्णयः; अथ प्रतिपन्निर्णयः; ७, अथ द्वितीयानिर्णयः; अथ तृतीयानिर्णयः; अथ चतुर्थीनिर्णयः; ८, पञ्चमीनिर्णयः; अथ षष्ठीनिर्णयः; ९,

अथ सप्तमीनिर्णयः ; अथाष्टमीनिर्णयः ; अथ नवमीनिर्णयः; १०, अथ दशमीनिर्णयः ; अथ दशमीविद्धैकादश्युपवासनिषेधमाह, अथैकादशीनिर्णयः ; ११, अथैकादश्याधिक्ये नारद आह ; १२, अथ द्वादशीनिर्णयः ; अथ त्रयोदशीनिर्णयः ; अथ चतुर्द्दशीनिर्णयः ; अथ पञ्चदशी निर्णीयते : १३, अथामावास्या निर्णीयते ; १४, अमावास्यायां उपवासादि विचार्य्यते, अथ यागकालो निरूप्यते : अथ विकृतेष्टिर्विचार्य्यते, अथाशोकाष्टमी निरूप्यते ; १५, अथ कामदेवत्रयोदशी, अथाक्षयतृतीया ; १६, अथ सावित्रीव्रतं निरूप्यते, आरण्यकषष्ठी ; १७, चम्पकद्वादशी देवस्नाननिर्णयः, भूमिरजस्वला, श्रीकृष्णस्य गुण्डिचायात्रा ; १८,अथ ब्रह्मादिदेवताशयनकालाः, अथाषाढ़शुक्लैकादशी ; अथ देवशयनपार्श्वपरिवर्त्तनोत्थापनकालाः, अथ सङ्क्रमस्नानम् , अथ नागपञ्चमी ; १९, अथोपाकर्म्मकालनिर्णयः ; २०, अथ बलदेवस्य पूजा ; २१, अथ रक्षापञ्चमी, २२, अथ श्रीकृष्णस्य जन्माष्टमी निरूप्यते ; २३, अथ जयन्तीभेदो निरूप्यते, अथ सप्तपुरिकामावास्या, अथ गौरीव्रतम् ; अथ हरितालिकाचतुर्थी, अथ गणेश्वरचतुर्थी ; २४, अथ ऋषिपञ्चमी ; अथागस्त्यार्घ्यः ; अथ दूर्व्वाष्टमी ; अथानन्तव्रतचतुर्द्दशी ; अथ शक्रोत्थापनम् ; २५, अथ इन्द्रपूर्णिमा ; अथ महाष्टमी ; २६, अथापराजिता, अथ कौमुदी पूर्णिमा, अथ चित्राकृष्णचतुर्द्दशी, अथ प्रदीपामावास्या ; २७, अथ सुखरात्रिः ; अथ गोष्ठाष्टमी, अथ देवोत्थापनैकादशी ; २८, अथ प्रथमाष्टमी, अथ दीपालिकोत्सवः, अथ प्रावरणषष्ठी, अथ पाषाणचतुर्द्दशी, भद्राष्टमी ; अथ वकुलामावास्या, अथ घृतकम्बलम् ; २९, अथ माघकृष्णचतुर्द्दशी ; अथ वराहचतुर्द्दशी, अथ श्रीपञ्चमी, अथ माघसप्तमी, अथ भीष्माष्टमी, अथ भीष्मैकादशी ; ३०, अथ भीष्मद्वादशी ; फल्गूत्सवपूर्णिमा ; अथ शिवरात्रिः ; ३१, अथ चैत्रकृष्णचतुर्द्दशी, अधुना मासकृत्य निरूप्यते : वैशाखमासनिर्णयमाह ; ३२, ज्यैष्ठमासनिर्णयमाह, आषाढ़मासनिर्णयमाह, श्रावणमासनिर्णयमाह, भाद्रमासनिर्णयमाह, आश्विनमासकृत्यनिर्णयमाह, कार्त्तिकमासकृत्यम् ; ३३, अथ भीष्मपञ्चकम्, अथ आकाशप्रदीपदानम् ; ३४, अथ चातुर्म्मास्यव्रतारम्भः, ३५, अथ मार्गशीर्षव्रतारम्भः, अथ पौषमासकृत्यम् ; अथ माघमासकृत्यनियममाह ; ३६, अथ फाल्गुनमासकृत्यनियममाह, अथेदानीं महाचैत्रादयो लिख्यन्ते ; अथ महावैशाखी ; ३७, अथ व्यतीपातः ; अथ महाज्यैष्ठी ; ३८, अथ

श्रवणाद्वादशी ; अथ विष्णुशृङ्खला ; अथ महाकार्त्तिकी ; ३९ अथ रोहिणीप्रतिपत्, ४० ; अथ महोदयामावास्या, अथार्द्धोदयामावास्या ; ४१, अथ महामार्गी ; ४२, अथ पापनाशिनी, अथ गोविन्दद्वादशी, अथाष्टकाश्राद्धम् ; ४४, अथ युगाद्याः, अथ मन्वन्तराः ; ४५, अथाकामावै ; अथापरपक्षनिर्णयः ; ४६, अथ काम्यतिथिश्राद्धकालः, अथ सन्न्यासिनो महालयाश्राद्धनिरूपणम् ; ४७, अथ माघी-श्राद्धम् ; ४८, अथ अस्त्रादिहतानां चतुर्दशीश्राद्धम् ; अथ मासिकस्य महालया-श्राद्धम् ; ४९, अथ गयासंयोगः, अथ संक्रान्तिश्राद्धम् ; अथ उदकुम्भश्राद्धम् ; ५०, मासिकश्राद्धनिर्णयमाह ; त्रैपक्षिकनिर्णयमाह ; ऊनश्राद्धनिर्णयमाह, अथ सपिण्डीकरणनिर्णयः ; ५१, पितृसपिण्डीकरणनिर्णयः ; पितामह-माता-महयोरकृतसपिण्डीकरणविचारः ; ५२, अथ सन्न्यासिनां सपिण्डीकरणनिषेधः ; ५३, अपुत्रस्य सपिण्डीकरणविचारः ; ५४, अथ संवत्सरनियमः ; अथ सपिण्डीकरणोत्तरश्राद्धम् ; अथ मृताहश्राद्धकालनिर्णयः ; ५५, समाप्तिकालमाह ; ५६, अथ वैश्वदेवनिरूपणम् ; ५७, अथाग्नौकरणनिर्णयः ; श्राद्धाधिकारिणः ; ५८, अथानुपनीतविशेषमाह ; अथ एकदिने मृताहश्राद्धनिर्णयः ; अथ पार्व्वणैको-द्दिष्टयोः श्राद्धकर्म्म ; अथ प्रोषितस्य मृताहनिर्णयः ; ५९, अथाविदितश्राद्धनिर्णयः ; अथ विलम्बश्राद्धकालनिर्णयमाह ; ६०, अथैकदिने बहुश्राद्धनिर्णयः ; अथ संघात-मरणे श्राद्धानुष्ठाने क्रमनिर्णयमाह ; अथ सूर्य्यग्रहणे प्रत्याब्दिकश्राद्धनिर्णयमाह ; अथ ब्राह्मणभोजनपिण्डदानयोः प्राधान्यविचारः ; ६१, अथ जीवत्पितृकश्राद्ध-निर्णयः ; अथ पुत्रिकापुत्रश्राद्धम् ; द्विपितृश्राद्धम् ; अथ नैमित्तिकश्राद्धकाल-निर्णयमाह ; ६२, अथ नित्यश्राद्धम् ; अथ नान्दीमुखश्राद्धनिर्णयः ; ६३, संक्रान्ति-निर्णयः ; ६४, अथ ग्रहणनिर्णयः ; ६५, अथ द्विराषाढ़निर्णयः ; अथ नदीरजस्वला ; ६६, अथ व्रतादौ अशुद्धकालनिर्णयः ; ६७, अथारब्धव्रतासामर्थ्यमाह ; अथ भार्य्या-परित्यागः ; अथ गुर्व्विणीपतेः क्षौरादिनिषेधनिर्णयः ; अथ जन्मदिननिर्णयः ; ६८, अथ ज्येष्ठपुत्राणां ज्येष्ठ मासे क्षौरादिनिर्णयः ; अथ तैलाभ्यङ्गनिर्णयमाह ; अथ तिलामलकग्रहणनिर्णयः ; ६९, अथ गर्भाधानकालमाह ; अथ पुंसवनकाल-माह ; अथ जातकर्म्मकालमाह ; ७०, अथ नामकरणम्, वहिर्निष्क्रमणम्, अन्न-प्राशनम्, चूड़ाकरणम्, उपनयनम्, विवाहः ।

*End* :—

श्लोकद्वयमस्त्राणि श्लोकद्वयशतानि च ।

पुनः श्लोकशतार्द्धञ्च कथितं ग्रन्थसंख्यया ॥

*Colophon* :—

इति श्रीविश्वनाथविरचितायां स्मृतिसारसमुच्चयः समाप्तः ।

Besides the Purāṇas and ancient works on Smṛti, it quotes Dhavalasaṃgraha 15A, Kṛtyakaumudī 15B, Śatānandasaṃgraha 16A, Mādhavīya 16A, Mādhavīkara 16B, Ācārakhaṇḍa 30B, Lakṣmīdhara 33A, Kalpataru 30A, Govindarāja 33B, Kālādarśa 34B, Rajamārtaṇḍa 35B, Jātūkarṇa 45A.

## 2677.

5596A. *The Same.*

Substance, palm-leaf. 15½ × 1½ inches Folia, 74. Lines, 5, 6 on a page. Character, Uḍiya, about 200 years old. Appearance, old. Complete.

*End* :—

श्लोकानान्तु सहस्रे द्वे द्वे शते द्वे च विंशती ।

ततो दश पुनः श्लोका ग्रन्थसंख्या प्रकीर्त्तिता ॥

*Colophon* :—

इति श्रीविश्वनाथविरचितः स्मृतिसारसंग्रहः समाप्तः ।

*Post Colophon Statement* :—

शुभमस्तु सर्व्वजगतां श्रीगोविन्ददीक्षितेन लिखितमिदं पुस्तकं मुकुन्ददेवस्य पञ्चत्रिंशेऽङ्के चैत्रे मासि शुक्ले पक्षे द्वादश्यां समाप्तमिदम् ।

See the previous number.

## 2678.

6417. **नक्षत्रसमुच्चयः** *Nakṣattrasamuccayaḥ.*

(*By Lallavarāha Suta*) (?).

Substance, country-made paper. 9 × 5 inches. Folia, 27. Lines, 9 on a page. **Extent in ślokas, 520.** Character, Nāgara. Copied in Saṃvat 1619. Appearance, old, discoloured and worn-out. Complete.

On Jyotiṣa as applied to Smṛti. Based on Ratnakoṣa by Lalla.

*Beginning* :—

ॐ नमो गणेशाय नमः ।

विनायकं नमस्कृत्य बालानां हितकाम्यया
उद्धृतश्च मया किञ्चित् शास्त्रं गौरवकारणात् । १ ।
छन्दोलक्षणहीनश्च नक्षत्राणां समुच्चयं ।
संक्षेपेण परं ज्ञानं रत्नकोषस्य मध्यतः ॥ २ ॥

*Colophon* :—

इति श्रीरत्नकोषमध्यात् सारोद्धारनक्षत्रसमुच्चयः समाप्तः ।

*Post Colophon* :—

संवत् १६१६ वर्षे प्रथमश्रावण वदि ४ दिने भाटीवास्तव्य अध्याहूरणालिषितं स्वयं पठनार्थं शुभं भवतु । कल्याणमस्तु ॥ यादृशमित्यादि । श्रीअम्बाविनायकप्रसादात् ।

*It ends* :—

कर्क्कादिभिश्च धनुर्मीनगते च सूर्ये
शुक्रास्तगे सुरगु(रु)[रौ] च तथापि सिंहे ।
नारभ्यते व्रत-विवाह-गृहप्रतिष्ठा-
चौरादिकर्म्म गमनाध्ययनं च वर्ज्जयेत् ॥

See Oxf. p. 333B. The Oxf. MS was copied in Saṃvat 1569=1513 A.D.

## 2679.

### 10329. कामक्रीडाविवाहपटलम् ।

*Kāmakrīḍāvivāhapaṭalam.*

*By Janārdana (Audīcyajñātīya).*

Substance, country-made paper. 11 × 4¾ inches. Folia, 10. Lines, 8 on a page. Extent in ślokas, 150. Character, modern Nāgara. Appearance, fresh. Complete.

*Colophon* :—

इत्यौदीच्यज्ञातीयजनार्द्दनकृते कामक्रीडाविवाहपटले षष्टि-

[श्लोका](पला)त्मकं सूत्रं सम्पूर्णम् ॥

*Post Col.* :—

अधिव्योमेऽमिते पक्षे दशम्यां मन्दवासरे ।

जागेश्वरेण लिखितं षष्टि[श्लोका](पला)त्मकं सूत्रं ॥

Astrology of marriage. There are 61 stanzas in a metre called Kāmakrīḍa

The work is dated Saṃvat 1520.

*Beg.* :—

ये देवज्ञाः प्राज्ञास्ते सर्व्वे ज्येष्ठं हेरम्बं

सत्पुत्रं श्रीशम्भो गौर्य्याः स्मारं स्मारं स्तुत्वाभ्यर्च्य ।

नामं नामं सर्व्वेषां कार्य्याणां सिद्धिं संप्राप्ता

स्तं देवं पाणिग्राहे शास्त्रारम्भेहं वन्दे ॥ १ ॥

... ... ... ... ...

... ... ... ... .. २ ॥

आदौ गोत्रं शीलं मानाद्यं विद्यां वित्तं प्राधान्यं

ज्ञातिश्रेष्ठं गात्रं सर्व्वाङ्गीणं वार्धुक्यं (?) च वीक्ष्यायुष्यं ।

सामुद्रैश्चिह्नैः प्राधान्यैः संयुक्तं नो दूरं

नो शूरं नो क्रूरं भर्त्तारं स्त्री युञ्ज्यात् ॥ ३ ॥, etc., etc.

*End* :—

औदीच्याख्यां ज्ञातौ षटकर्म्मा देवज्ञोनन्तोभूत्

लक्ष्मीकान्तः शान्तो भक्त्या लक्ष्मीकान्तस्यासक्तः ।

तज्जन्मा जानाख्यः सत्यवाग्निष्ठः पित्रोर्भक्त-

स्तेनेदं कामक्रीडाशास्त्रं षष्टिश्लोकं संतेने ॥ ५८ ॥

वैवाह्यं शास्त्रं श्रोतव्यमवागैर्दैवज्ञैर्विज्ञैर्व्यक्तं

यक्तं य × × कामक्रीडाख्यैः छन्दोभिः

दम्पत्योरन्योन्यप्रेम्णा स्वच्छन्दं कामक्रीडाच्छन्दः

सर्व्वान् कामान् वाढं शश्वद्दिश्यात् ॥ ६० ॥

खनेत्रवाणाब्जः१५२०विनिर्म्मितेऽत्र वर्षे खरे फाल्गुनि मासि शुभ्र।
दिनेऽष्टमे ज्ञेन युते जनाख्यः कृत्वालिखत् कौतुकरत्नमाख्यं ॥ ६१ ॥

## 2680.

### 6400. ज्योतिषरत्नमालादीधितिः।

*Jyotiṣaratnamālādīdhitiḥ.*

*By Indradattopādhyāya.*

Substance, country-made paper. 10 × 4½ inches. Folia, 15 to 28. Lines, 12 on a page. Character, Nāgara. Extent in ślokas, 800. Date, Saṃvat 1843. Appearance, old and discoloured. Defective in the beginning.

*Last Colophon* :—

इति श्रीमद्गर्गकुलसुकुलपदवीक-श्रीमुरलीधरात्मजमोहन-लालतनय-श्रीमदुपाध्यायलालमणि[शर्म्म](शर्म्मणा)सूनुना सोमा-वतीदेवीगर्भसम्भवश्रीमदिन्द्रदत्तोपाध्यायकृता ज्योतिषरत्नमाला-दीधितिः समाप्ता।

*Post Colophon* :—

शुभं भूयात्।

त्रिवेदनागेन्दु खलु विक्रमाब्दे १८४३

वैशाखमासे सितपक्षशुक्रे।

श्रीमान् द्विजो लेखित पुस्तकी त्वियं।

गंगाधरो नाम द्विजदेवभक्तः॥

The commentary of the closing śloka :—

स्वगर्व्वं परिहरन्नवग्रंथे समूलग्रंथस्यापनाय प्रार्थयते।

भ्रातरिति कोमलालापे भ्रातरिति।

हे सखे आधुनिककविप्रकृतमेतदिति मावमंथा यतो मुनिकृतिव्यतिरेकेण किमपि स्वकपोलकल्पितं मया नोक्तम्, etc., etc. ... ... ...

The text Jyotiṣa-Ratnamālā appears to be by Śrīpati Bhaṭṭa, for which see L. 1426.

17A, इति श्रीमद्दिव्यदत्तोपाध्यायकृतायां दीधितौ लग्नप्रकरणं द्वादशम्; 17B, ॰संस्कारप्रकरणं त्रयोदशम्; 19A, ॰राजाभिषेकप्रकरणं चतुर्दशम्; 23A, ॰यात्राप्रकरणं पञ्चदशम्; 25A, ॰विवाहप्रकरणं षोड़शम्; 26B, ॰गृहप्रकरणं सप्तदशम्; 27A, ॰गृहप्रवेशप्रकरणमष्टादशम्; 27B, (from the last line) उक्तप्रकरणानामनुक्रमणीं शिष्याणां झटिति परिस्फूर्त्यर्थं चाह संवत्सरादीत्यादिश्लोकाभ्याम् कृतग्रंथस्य प्रेक्षावदपेक्षणाय समूलतां कथयन्नाशिषं प्रार्थयते इतीति उक्तप्रकारेण रत्नमालां रत्नकोषात्सुकृतात् श्रीपतिगणकः उदहरदुद्धृतवान् ..., etc., etc.

Cat. Cat. Vol. I, says, the Text Jyotiṣa ratnamālā by Srīpatī Upādhyāya has been quoted by Raghunandan and Kamalākara.

## 2681.

10620. **देवदासप्रकाशः।** *Devadāsaprakāśaḥ.*

*By Devadāsa Miśra.*

Substance, country-made paper. 11¾ × 5 inches. Folia, 253. Lines, 8 to 10 on a page. Extent in ślokas, 5,500. Character, Nāgara. Date, Saṃvat 1943. Appearance, fresh. Complete.

A work on Jyotiṣa, as applied to Smṛti.

The authorities consulted :

कल्पद्रुमकर्मार्णवसारदीपमिताक्षरादर्शमुखान् निबन्धान्
प्रपञ्च+माश्रयवेदितार्थं तिथ्यादिसन्देहमपाकरिष्ये ॥

*Last Colophon* :—

इति श्रीदेवदासप्रकाशे मलमासनिर्णयः ॥

Then we have a genealogy of the author :—

आसीद्गौतमगोत्रगोऽर्जुन इति श्रीमालवंशा + +
वन्द्यस्तत्तनयो महर्षिसदृशः श्रीरामदेवः कृती ।
तस्योपासनकर्म्मठः स्मृतिघनः श्रीदेवदासः सुतः
तेनाकारि निबन्धरत्नमखिलं ग्रन्थार्थसारप्रदम् ॥

इति मिश्रावसथिकदेवदासानां कृतिः ।

Then the date —

अथ संवत्सरेस्मिन् श्रीविक्रमादित्यराज्ये संवत् १८४३ मी० वैशाख वदी ४ ।

श्रीराम ॥

बालमुकुन्दस्येदं पुस्तकम् ॥

For a full description of the work see L. 1832. R. Mittra's MS. reads कृत्यदीप in the place of Sāradīpa in the second of the opening verses.

## 2682.

1433. *The Same.*

Substance, country-made paper. 12½ × 7 inches. Folia, 243. Lines, 9 on a page. Extent in ślokas, 7,750. Character, Nāgara. Appearance, fresh. Complete.

Bound in puthi form of which the boards have disappeared. The manuscript from which this was copied had been full of lacuna.

For the work see L. 1832.

The verse at the end :-

आसीद्गौतम गोत्रजोर्ज्जुन इति श्री + + + वः क्ष्माभृता
वन्ध्यस्तनयो महर्षिसदृशः श्रीना[रा]मदेव[ः] कृती ।
तस्योपासनकर्म्मठः स्मृतिचणः श्रीदेवदासः सुतः
तेनाकारि निबन्धरत्न[म]खिलं ग्रन्था × × × सारस्पदम् ॥

## 2683.

3370. **समयप्रदीपः ।** *Samayapradīpaḥ.*

*By Hariharācārya.*

Substance, country-made paper. The first eighteen leaves measure 14 × 3½ inches; 19 to 36, 9½ × 3½; 38 and 39, of the same measurement as the first 18 leaves; 40 to 42, of the same measurement as 19 to 36; the 43rd leaf 12 × 3½ inches, and the 44th, 13½ × 3 inches. Folia, 44 of which the 37th is missing. Lines, 6, 8 on a page. Character, Bengali. Date, Saka 1711. Appearance, discoloured. Complete.

*The Last Colophon* :—

इति श्रीहरिहराचार्य्यसंग्रहीत समयप्रदीपः समाप्तः ।

*Post Colophon* :—

श्रीवाञ्छारामदेवशर्म्मणः स्वाक्षरमिदं । श्रीयुतरामसोहनदेव-
शर्म्मणः पुस्तकञ्च शुभमस्तु शकाब्दाः १७११/४ भाद्रस्य ।

Jyotiṣa as applied to Smṛti.

For the work see L 1088. The chronogram, at the end of the MS. described by Rājendralāla, which gives the date of the composition of the work as Śaka 1481 = 1559 A.D., is not found in the present manuscript.

## 2684.

5174. *The Same.*

Substance, country-made yellow paper. 14 × 3 inches. Folia, 26, Lines, 6 on a page. Extent in ślokas, 600. Character, Bengali. Date, Śaka, 1765. Appearance, fresh. Complete.

*Beginning* :—

ॐ नमो गणेशाय नमः ।
अनायासेन समयं कर्म्मणां यो विवित्सति ।
तदर्थं ज्योतिषः श्लोकान् संचिनोमि यथामति ॥
ज्योतिर्ग्रन्थकलापाद्वचनाल्या प्रदीपमेतम् ।
कुरुते श्रीहरिहराचार्य्यः ॥
नाधीत्य यो ज्योतिषपुस्तकानि
विवित्सवः कर्म्मकलापकालं ।
पश्यन्तु ते मे समयप्रदीपम्
भवेद्यतोऽज्ञानतमो निरासः ॥
तत्रादौ चन्द्रशुद्धिः ॥

A treatise on Jyotiṣa as applied to Smṛti, written, as Aufrecht says, in A.D. 1560.

*End* :—

ये विद्वांसः कर्म्मकालं तदर्थं
ज्योतिषः श्लोकाः संगृहीताः कियन्तः ।
अत्राज्ञानां वैकृतं + यदि स्यात्
श्रीमन्तस्तत्पण्डिताः शोधयन्तु ॥

*Colophon* :—

इति श्रीहरिहराचार्य्यसंगृहीत समयप्रदीपः समाप्तः ।

*Post Colophon Statement* :—

पितृचरणाः शरणम् ।

शाके वाणगिरीशपर्व्वतनिशाकान्तप्रमाणे शुचौ
पक्षे सर्पयमप्रमे कुमुदिनीनाथात्मजे पुस्तकम् ।
प्रालेखीद्विमजाङ्घ्रिपङ्कजयुगं सम्भाव्य चित्ते मुदा
श्रीकाशीपतिपत्तसरोजनिलयं श्रीकान्तिचन्द्रो द्विजः ॥

शकाब्दाः १७६५

## 2685.

10800. *The Same.*

Substance, country-made paper. 14 × 4½ inches. Folia, 22. Lines. 7, 8 on a page. Character, Bengali in a modern hand. Appearance, fresh, Complete.

Well known and often noticed.

*Colophon* :—

इति श्रीहरिहराचार्य्यसंगृहीतः समयप्रदीपः समाप्तः ।

On the reverse of the last leaf, there is an index of the work.

## 2686.

10828. *The Same.*

Substance, country-made paper. 14 × 3½ inches. Folia, 38. Lines, 8 on a page. Extent in Slokas, 1,088. Character, Bengali. Date, Saka 1745. Appearance, fresh. Complete.

*Colophon* :—

इति हरिहराचार्य्यविरचितः समयप्रदीपसंग्रहः समाप्तः ।

*Post Col.* :—

शुभमस्तु शकाब्दाः १७४५ । लिखितं श्रीहिरारामदेवशर्म्मणा ।

Well known and often noticed.

## 2687.

8682. वर्षकृत्यम् । *Varṣakṛtyam.*

*By Vācaspati.*

*A part of Kṛtyacintāmaṇi.*

Substance, country-made paper. 13 x 4½ inches. Folia, 64. Lines, 10 on a page. Extent in ślokas, 1,900. Character, Nāgara. Old.

Incomplete. Leaves 1 to 64, out of which 2, 16 and 17 are missing.

*It begins* :—

मन्वादिमतमालोक्य प्रणम्य पुरुषोत्तमं
श्रीवाचस्पतिना सम्यक् वर्षकृत्यं निबध्यते ।
धर्म्मश्च परिभाषा च ततो मासपरिस्थितिः
मलमासव्यवस्था च कृत्यं चैत्रादिकस्य च ।
प्रकीर्णकं समन्वादियुग [।] द्योदि ततः परं
तिथिद्वैधव्यवस्था च मलमासादिनिर्णयः ।
चन्द्रसूर्य्योपरागश्च प्रकाश्यन्ते मनीषिणा
कृत्यचिन्ता(मणिवत्)[मणावत्र] श्रीवाचस्पतिशर्म्मणा ।

तत्र स्वर्गापवर्गादिरूपपरमपुरुषार्थत्वेनादौ धर्म्मो निरूप्यते ।

## 2688.

3139. **प्रौढ़प्रतापमार्त्तण्डः** *or* **कालनिर्णयसंग्रहः ।**

*Prauḍhapratāpamārtaṇḍaḥ* or *Kālanirṇayasaṃgrahaḥ.*

*By Pratāparudra (Gajapati).*

For the MS. and the work see L. 4104. It is incomplete at the end.

Rājendralāla omits a verse in the introduction. which is of some significance. It runs :—

अश्वाधीशनरेशाः सन्ति महीमण्डले बहवः ।
गजपतिरेकः श्मायां सकलकलश्चन्द्रवद्गगने ॥

This is one of the verses in praise of Pratāparudra.

## 2689.

10586. *The Same.*

Substance, country-made paper. $10\frac{1}{2} \times 4\frac{1}{4}$ inches. Folia, 158. Lines 8 on a page. Character, Nāgara of the sixteenth century. Appearance, old and worn-out. Very nearly complete

For the beginning of the work see L. 4104.

8A, इति श्रीमत् प्रौढ़प्रतापविनिर्ज्जितभूपालचक्रचूड़ामणिमरीचिमञ्जरी [नीरा] जितचरणकमल-श्रीमन्महाराजाधिराजपुरुषोत्तमदेवगजपतिनन्दनभ्रमर-वरवीरभट्टारकोदार (in other Colophons simply केदार in the place भट्टारकोदार) पाकनालचोलमहामण्डलेश्वर-गजपतिगौड़ेश्वर-नवकोटि-कार्णाटकलवरगेश्वर--रूपनारायणेत्यादि-विविधविरुदावलिविराजमानमानोन्नत--मानापनोदकदुस्तरसंसारसागरविनिमग्ननिखिलजनसमुद्धरणधीरनारायणचरणार-विन्दमकरन्दमधुकरकीर्त्तिकौमुदीसमुल्लाससुधाकरसकलशास्त्रविशारदशारदाधि--वासपरमात्मविचारचातुरीचमत्कार--चिन्तामणिदिनकरवंशावतंसमहाराजाधि--राजश्रीमत्प्रतापरुद्रगजपतिविरचिते प्रतापमार्त्तण्डाभिधे समयनिर्णये पदार्थसंग्रहो नाम प्रथमः प्रकाशः ॥

जगन्नाथपदाम्भोजमकरन्दमधुव्रतः ।

प्रतापरुद्रः कुरुते वत्सरादिनिरूपणम् ॥

19A, ॰वत्सरादिनिरूपणं नाम द्वितीयः प्रकाशः ।

A second and more modern hand begins in 50A and continues to fol. 58.

102A, ॰प्रतिपदादितिथिनिर्णयो नाम तृतीयः प्रकाशः ।

136B, प्रासङ्गिक-प्रकीर्णको (र्णो) नाम चतुर्थः प्रकाशः ।

पुरुषोत्तमभूपालनन्दनः कुरुतेऽधुना ।

निरूपणं विष्णुभक्तेर्विष्णुभक्तशिरोमणिः ॥

The MS. ends thus abruptly.

श्रीपाराशरगोत्रजः क्षितिभृतां वन्द्योऽभवद्गौरवः

तज्जन्माखिलशास्त्रवेदविदभून्नारायणः ।

## 2690.

10385. **मलमासनिर्णयः ।** *Malamāsanirṇayaḥ.*

*Being part of Pratāpārka.*

*By Viśveśvara.*

Substance, country-made paper. 9½ × 4 inches. Folia, 16. Lines, 8 on a page. Extent in ślokas, 250. Character, Nāgara. Date, Saṃvat 1879. Appearance, fresh. Complete.

*Colophon* :—

इति पुण्डरीकयाजिविश्वेश्वरविरचिते प्रतापार्के मलमासवर्ज्यावर्ज्यनिर्णयः ॥

*Post Col.* :—

सं १८७९

On the top of the first leaf :—

अथ प्रतापार्के मलमासनिर्णयः ॥

*Beg.* :—

+ + + तत्र चैकमात्र संक्रान्तिरहिततं तत्क्षयमासाधिकमाससाधारणं स द्विविधः अधिकमासः क्षयमासश्च ।

... ... ... ...

तदुक्तं निर्णयामृते ।

अस्ति त्रयोदशो मासः स च श्रुत्या निगद्यते ।
असौ चान्द्रो न सौरः स्यान्नास्ति सौरस्त्रयोदशः ॥

1A, निर्णयामृतम्, भगुः ; 2A, गृह्यपरिशिष्टे : 2B, सत्यव्रतः, जाबालिः ; 3B, परिशिष्टः, पैठीनसिः ; 4A, प्रजापतिः, काठकगृह्यः ; 4B, काठकगृह्य-परिशिष्टः ; 7B, वृहस्पतिः ; 8A, कौथुमिः, स्मृतिसंग्रहः, मत्स्यपुराणम् ; 8B, ऋष्यशृङ्गवचनानि ; 9A, गालववचनम् ; 9B, कालादर्शः ; 10B, ज्योतिः पराशरः, महाभारतम् ; 11B, नागरखण्डः ; 14A, संहिताप्रदीपः, रत्नमाला ; 14B, लल्लः ; 15A, माण्डव्यः, शौनकः ;

The latest authority quoted in this fragment is Nirṇayāmṛtha, which can not be placed later than the 15th century; and it does not quote any author of the 16th century.

## 2691.

3557. **दानक्रियाकौमुदी ।** *Dānakriyākaumudī.*

*A part of the Varṣakriyākaumudī.*

*By Govindānand Kavikaṅkaṇācārya.*

Substance, country-made paper. 14 × 2 inches. Folia, 113 by counting. Lines, 5, 6 on a page. Character, Bengali. Date, Saka 1533 and 919 of the Malla era. Appearance, old and worn-out. Writing is effaced in many leaves and leaf marks are mostly worn-off.

*It ends* :—

गणपतिभट्टतनूजो गोविन्दानन्दपण्डितः श्रीमान् ।
समकृत सन्तोषार्थं स + + + + मेताम् ॥
सर्व्वान्तर्यामिने तस्मै गोविन्दाय नमो नमः ।
अत्रानुरागं धास्यन्ति यत्कृपाभिर्विपश्चितः ॥

*Colophon* :—

इति + + + विकङ्कणाचार्य्यविरचितायां क्रियाकौमुद्यां दान-कौमुदीनाम द्वितीयो यामः । समाप्तः ।

*Post Colophon* :—

श्रीकृष्णाय नमः ॥ शक १५३३ मल्लस्य ९१९ । १६३ आश्विन ।

पञ्चगव्यमुच्यते ।

Five lines on the Pañcagavya :

पञ्चामृतमिदं प्रोक्तं विधेयं सर्व्वकर्म्मसु, etc., etc.

Printed in the Bibl. Ind. Series.

This incomplete MS. covers the portion of the printed edition from p. 5, line 5, to the end.

This old MS., copied more than three hundred years back, was utilised in the aforesaid edition. But the editor says nothing about the missing leaves.

## 2692.

687. **वर्षक्रियाकौमुदी ।** *Varṣakriyākaumudī.*

*By Govindananda Ācārya.*

For the manuscript see L. 1530.

Printed in the Bibl. Ind. Series. This manuscript was not apparently collated.

*Post Colophon Statement* :—

शकाब्दाः १७६६ तारिख २५ आषाढ़ ।

## 2693.

1306. **संवत्सरोत्सवकालनिर्णयप्रतानः ।**

*Saṃvatsarotsavakālanirṇayapratānaḥ.*

*By Puruṣottama.*

Substance, country-made paper. 11 × 5 inches. Folia, 84. Lines, 7 on a page. Extent in ślokas, 1,260. Character, Nāgara. Date, Saṃvat 1669. Appearance, fresh. Complete.

On times of Vaiṣṇavite festivals of the Vallabhācarya Sect.

*Beginning* :—

श्रीगोपीजनवल्लभाय नमः ॥

श्रीमदाचार्य्यचरणान् प्रभुं श्रीविट्ठलेश्वरम्।

नत्वोत्सवानां समयः सोपपत्तिका। उच्यते ॥

तत्र तावत् प्रथमं जन्माष्टमीसमय एव निर्णयः सकलोत्सवमूललालाविर्भावो-त्सवस्य स च प्रभुभिरेव निर्णीतः प्रथमं तन्निर्णयस[म]य एव प्रकाश्यते इत्यादि ॥

*It ends thus* :—

आलोच्य श्रीमदाचार्य्यश्रीमत्प्रभुसरस्वती-

सम्प्रदायं च निश्चित्य पुत्रपौत्रीयनिर्णयैः।

तत्कृपाबलमाश्रित्य संचिन्तनवरयुक्तिभिः।

सम्प्रदायाज्ञजनताज्ञतग्रन्थाकलङ्कितां ॥ २ ॥

पद्धतिं निर्मलीकर्त्तुं ब्रजराजविनिर्मितां।

संवत्सरोत्सवानेच्छो (?)निर्णयोऽयं मया कृतः ॥ ३ ॥

प्रभवस्तेन तुष्यन्तु यन्मयोक्तमबोधतः।

तत्क्षाम्यन्तु यथायन्तु निचयो न भवेन्मयि ॥ ४ ॥ (?)

*Colophon* :—

इति श्रीमत्प्रभुपादारविन्दमकरन्दप्राप्तिप्राप्तपुरुषोत्तमाभिधानेन विरचितः संवत्सरोत्सवकालनिर्णयप्रतानः सम्पूर्णः।

*Post Col.* :—

संवत् १९९८ भाद्रपदकृष्णत्रयोदश्यां १३ गुरुवासरेते दिन-पुस्तकं समाप्तं। यादृशं पुस्तकं, etc., etc., etc.

Brajarāja wrote an earlier work on the same subject and Puruṣottama the present author improves upon it and makes it clear.

## 2694.

6418B. लग्नशुद्धिः। *Lagnaśuddhiḥ.*

*By Keśavārka with Gaṇeśa's commentary.*

**Substance, etc., the same as of the next number. Folia—2 marked 74 to 77 in continuation of 6418A.**

*It begins* :—

Comm श्रीगणेशाय नमः ।

विवाहोपपदं वृंदावनं व्याख्याय केशवम्

तत्कृतां लग्नशुद्धिं च गणेशो व्याचिकीर्षति ॥

तत्रादौ विहितनक्षत्रादिकमाह ।

Text ध्रुवानुराधामृगमूलरेवती-

करं मघास्वातिरदूषणो गणः ।

रवेरमीनामकरादि षड् गृहे

करग्रहे मंगलकृत्मृगीदृशाम् ॥

There are eighteen verses. The 18th runs :—

Text मध्योदये सायनसूर्यभोग्यं

स षड्भयुक्तं च ध्रुवं धृनाम् ।

इति स्फुटेयं शिशुबोधनाय

श्रीकेशवार्केण विलग्नशुद्धिः ॥ १८ ॥

Comm. इतीयं विलग्नस्य विवाहलग्नस्य शुद्धिः ।, etc., etc.

The commentator Ganeśa Daivajña was the author's son, who wrote Grahalāghavasiddhāntarahasya in 1520 A.D.

## 2695.

6418A. **विवाहवृन्दावनम्** । *Vivāhavṛndāvanam.*

*By Keśavārka.*

*With the commentary by Gaṇeśa.*

**Substance, country-made paper. 9½ x 4 inches. Folia, 9 to 73. Lines, 13 on a page. Extent in Ślokas, 3,200. Character, Nāgara of the seventeenth century. Appearance, old and discoloured. Incomplete in the beginning.**

**On auspicious times for marriages.**

**For the Text see W. p. 261, Oxf. p. 336B and L. No. 2454.**

The commentary was finished in Śaka 1476.

The present manuscript has ślokas at the end, about the author's family which were not in the MSS. described by Rājendralāla and Aufrecht, and inaccurately quoted by Weber.

*The 4 ślokas* :—

अभूद्भरद्वाजमहर्षिवंशे विश्वावतंसे श्रुतितत्त्ववेदी ।
औदीच्यपारित्रपथप्रवर्त्ती जनार्द्दनो याज्ञिकचक्रवर्त्ती ॥ १ ॥
अस्ति श्रियादित्य इति स्म तस्य सूनुः श्रियादित्य इति द्वितीयः ।
त्रिस्कंधपारंगतरंगमल्लस्तदात्मजो राणग इत्युदीर्य्यते ॥ २ ॥
श्रीकेशवः सकविरध्ययनाध्वनीनव्यूहान् प्रतर्पयितुमर्थपयःप्रवाहैः ।
दैवज्ञराणगसुतः सुतपः श्रयेस्मिन् वृन्दावने मुनिगवीनिवहं दुदोह ॥ ३
अवऊदृष्टिधियः कियदप्यदः पदगभीरमधीरभिरंस्यते ।
विशदशास्त्रधियां त्विदमेकदा श्रुतिगतं रमनाम् विवृतस्यति ॥ ४ ॥

(The 4th is not in the W. MS.).

*The commentary ends* :—

पश्चात्सागरपूर्व्ववर्त्तितटगे ग्रामेत्रनंद्यादिमे
रंभापूगरमालशीर्षनिचुलच्छायावितानं वसन् ।
नानाशास्त्रकलाकलापचतुरः श्रीकेशवस्यात्मजः
टीकां युक्तिमतीं गणेशविबुधो वृन्दावनस्याकरोत् ॥
रसनगमनु १४७६ तुल्ये शाके आनन्दवर्षे
विवृतिमकृत शस्तां दीपिकाख्यां गणेशः ।
यदिह लिखितमल्पानल्पकं वा सदोषं
तदतिविमलधीभिः शोध्यमित्यर्थये तान् ॥

*Colophon* :—

इति श्रीसकलागमाचार्य्यवर्य्य-श्रीकेशवसांवत्सरात्मज-गणेश-दैवज्ञविरचिता विवाहवृन्दावनटीका विवाहदीपिकाख्या समाप्ता ।

अत्र ग्रंथसंख्या अनुष्टुभा द्वात्रिंशच्छतानि ३२०० ॥

श्रीशुभं भवतु ।

The first Colophon in the incomplete manuscript.

16B, इति श्रीसकलागमाचार्य्यवर्य्य ०कालमीमांसाध्यायः—(marked 2 in Oxf ).

## 2696.

### 2238. व्यवहारसारः । *Vyavahārasārah.*

*By Kesavārka.*

Substance, country-made paper. 8 × 3 inches. Folia, 19. Lines, 8 on a page. Extent in Ślokas, 288 Character, Nāgara of the early eighteenth century. Discoloured Verse. Complete.

*Last Col.* :—

समाप्तोऽयं व्यवहारसारः ।

The scope and object of the work :—

1B, वराह-कात्यायन-गर्ग-लल्ल-व्यासादिशास्त्राणि विलोक्य सम्यक् ।
प्रोक्ता मया श्लोकशतद्वयेन ग्रन्थोऽस्फुटोयं व्यवहारसारः ॥
तिथिवासरयोगर्क्षकरणाद्यर्कसंक्रमान् ।
गोचरं राशिसम्बन्धं विवाहपटलं ब्रुवे ।

Though the author says in the opening verse that the work consists of 200 verses there are really 235 verses altogether.

*Colophons* :—

| | | | In verses. |
|---|---|---|---|
| 3B, | इति व्यवहारसारे | तिथिप्रकरणं | ... 26 |
| 5B, | ,, ,, | वारप्रकरणम्, | ... 31 |
| 6A, | ,, . | योगप्रकरणम् | ... 7 |
| 12A, | ,, ,, | नक्षत्रप्रकरणम् | ... 82 |
| 12B, | ,, ,, | करणप्रकरणम् | ... 5 |
| 14A, | ,, ,, | संक्रान्तिप्रकरणम् | ... 19 |
| 15A, | ,, ,, | गोचारप्रकरणम् | ... 14 |
| 16A, | . ,, | राशिकूटाध्याय | ... 12 |
| 17A, | ,, ,, | विवाहत्याज्यप्रकरणम् | 18 |
| 18B, | ,, श्रीकेशवार्कविरचिते | ०विवाहप्रकरणम् | 21 |
| | | | 235 |

## 2697.

### 6409. मुहूर्त्तसिद्धिः । *Muhūrtasiddhiḥ.*

*By Mahādeva, pupil of Gaṇeśa Daivajña.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 4. Lines, 15 on a page. Extent in ślokas, 150. Character, Nāgara of the nineteenth century. Appearance, discoloured. Complete.

On Jyotiṣa as applied to Smṛti.

The Maṅgalācaraṇa and the object of the work :—

प्रणम्य गौरीं स्वगुरुं गणेशम्
सूर्य्यादिखेटान् समुखं शिवञ्च ।
विलोक्य [शा]स्त्रोदितसारमेतत्
वक्ष्ये महादेवो मुहूर्त्तसिद्धिम् ॥
शिशु+दोदिर्घतरां प्रवक्ष्ये (?)
ह्यासं फलाकांक्षि गमिष्यति च ।
मंदोप्यहं मुहूर्त्तफले गमिष्ये
गौरी [रि] सुतोहं प्रकरोमि वंधम् ॥
करिष्ये नवतिश्लोकान् लक्ष्यलक्षणसंयुतान् ।
वंदे लंकारगौयुक्तान् वसुवर्णोपशोभितान् ॥ (?)

*It ends* :—

उद्वाहकाले व्रतबंधने च
सी ( चि ) मंतपक्षे च गृहप्रवेशे (।?।)
वास्तुप्रवेशे च जलाशये च
गो चिंतनीयः खलु घातचंद्रः ॥ १००

*Col.* :—

मुहू सि संपूर्णं ॥

## 2698.

### 6426. *The Same.*

Substance, country-made paper. 10 × 6 inches. Folia, 10. Lines, 12 on a page. Extent in ślokas, 150. Character, Nāgara. Date, Saṃvat 1894. Appearance, discoloured. Complete.

See the previous number. It has one verse more at the end, marked 99. The preceding verse is the last in that number, although marked 100.

The additional verse runs :—

मुहूर्त्तसिद्धिं सुतरां चकार
गद्यैः सुपद्यै रचितं मनोज्ञम् ।
पाराशरगोत्रे पिधरी वसिष्ठो-
मतकृत्तस्यानन्दपूरितस्या ॥ (?)

*Colophon* :—

इति मुहूर्त्त सिद्धि संपूर्णा ।

*Post Colophon* :—

संवत् १८६४ आषाढादि ६५ शाके १७६० प्रवर्त्तमाने ज्येष्ठमासे कृष्णपक्षे तिथौ त्रयोदश्यां बुधवासरान्वितायां इदं पुस्तकं संपूर्णम् ।

## 2699.

10614. **मुहूर्त्तमार्त्तण्डः ।** *Muhūrtamārtaṇḍaḥ.*

*With its Comm.* **मार्त्तण्डवल्लभा ।** *Mārtaṇḍavallabha.*

*By Nārāyaṇa, son of Ananta.*

Substance, country-made paper. 12 × 5 inches. Folia, 60. In Tripāṭha form. Character, Nāgara of the early nineteenth century. Appearance, discoloured. Complete.

The last Cols. of the Text and its Comm. :—

(Text) इति नारायणभट्टविरचितो मुहूर्त्तमार्त्तण्डः समाप्तः ।

(Comm.) इति स्वकृतमुहूर्त्तमार्त्तण्डटीका मार्त्तण्डवल्लभा समाप्ता ।

The text was composed in 1572 A.D. and the commentary in 1573. See W., p. 263 and L. 1737.

## 2700.

8709. **मार्त्तण्डवल्लभा ।** *Mārttaṇḍavallabhā.*

*A Commentary on Muhūrtamārtaṇḍa, by the author himself.*

Substance, country-made paper. 10½ × 6 inches. Folia, 90. Lines, 19 on a page. Extent in ślokas, 5,400. Character, Nāgara. Date, Saṃvat 1741. Appearance, fresh. Complete.

*The end* :—

अथ ग्रन्थस्याशिषमनुनाह । (?)

त्र्यंकेन्द्रप्रमिते वर्षे शालिवाहनजन्मतः ।

कृतस्तपसि मार्त्तण्डः यमलं जयतूद्गतः ॥ ३

शालिवाहनजन्मतः त्र्यंकेन्द्र १४९३ प्रमिते वर्षे तपसि माघे मार्त्तण्डः मुहूर्त्तमार्त्तण्डः नामैकदेशग्रहणे नामग्रहणं । अथ उद्गतो मार्त्तण्डः अलमतिशयेन जयतु । यद्वा यमलं मार्त्तण्डयुग्मं उदयं उदयप्राप्तं जयतु सर्व्वोत्कर्षेण वर्त्त[ताम्](तु) । इति श्लोकमुहूर्त्त-मार्त्तण्डः समाप्तः । अथैतत् ग्रन्थाङ्गीकरणार्थंबुधप्रार्थना पूर्व्ववाक्यार्थः सुगमं । (?) इति मुहूर्त्त[मार्त्त]ण्डव्याख्या समाप्ता ।

आसीत् नासमणीरनामनगरे श्रीकौशिकस्यान्वये
ऽनन्तो वाजसनेयि-पूज्यचरणो माध्यन्दिनीयाग्रणीः ।
कृष्णास्तत्तनयः श्रुतिस्मृतिविदामग्रेसरो यो हरिः
तत्पुत्रः श्रुतिवित्तदात्मजवरोऽनन्तामिश्रो[त्रो] (त्रि)गुरुः ॥
तत्पुत्रस्तदनुग्रहात्तधिषणो नारायणस्थापर-
ग्रामे शिष्यगणेच्छया नि[ज]कृत(ः) ग्रन्थस्य टीकां स्फुटं ।
चक्रेऽस्यां कृपया परोपकृतये शोध्यं दुरुक्तं बुधैः
मावृत्तस्य विलोक्य था[र्ष्ट्यं]मपि ते कुप्यन्ति नो सज्जनाः ॥

इति श्रीश्लोकमुहूर्त्तमार्त्तण्डटीका मार्त्तण्डवल्लभा समाप्ता ।

७ ५ ५ १

अब्द वाण शर चन्द्र सम्मिते सङ्गते भुवि विशुद्धशाकके
माधवस्य कृपया समालिखत् देववन्द्यचरणेश सन्निधौ । १ ।

शं १७४१ आश्विना शुक्लामागुरौ श्रीमल्लक्ष्मीपूजनवेलायामयं ग्रन्थः समाप्तिमगात् । शमस्तु । श्रीमद्रामानन्दगुरो भवत्कृपया लि० शुभमस्तु ।

Continued from the last but one page.

अथ वृत्तसंख्या तथा फलश्रुतिमाह ।

यः षष्ट्यायुतशतवृत्तवद्धमेनं मार्त्तण्डं पठति नरः ।

स विश्वपूज्यो बह्वायुः सुखधनपुत्राभिमत्रभृत्यान् सम्माप्नोत्य-
विकलश्रीश्च तीर्थसिद्धिं ॥

न केवलं विश्वपूज्यो भवति षष्ट्यायुतं शतं १६० षष्ट्यशद् युतभिमतान्वि (?) वृत्तानि तै र्निबन्धः कृतो योऽयं मार्त्तण्डस्तमेनं मार्त्तण्डं यो नरः पठति स विश्वपूज्यो भवति अपितु बह्वायुः सुखधनपुत्रान् मित्रभृत्यान् सम्माप्नोति सुमुहूर्त्तमार्त्तण्डदानात् साधितकार्य्यैः स विश्वपूज्यो भवतीति युक्तञ्च परं विकलधी र्न भवति न विकला-धीर्यस्येति तथा । अत्र मुहूर्त्तमार्त्तण्डे यद्गर्भाधानादिकमुक्तं तत्रान्यवृत्तसंहिता-ग्रन्थानपेक्षत्वं ज्ञात्वाऽविकलधी(स्त्व) [त्वं] युक्तं अतएव तीर्थसिद्धिं समाप्नोतीति तीर्थसिद्धि['] शास्त्रार्थमल्पग्रन्थपठनेन वक्त्रर्थसिद्धिं समाप्नोतीति यद्वा तीर्थं गुरुस्तस्य सिद्धिः शास्त्रोपदेशलक्षणतां यद्वा तीर्थं यागस्तेन कृत्वा या सुखादिलक्षणा सिद्धिः ॥ तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रेष्विति विश्वः ।

The table of contents :—



The date of composition of the text is Saka 1493. The date is given both in a chronogram and in figures. There is no mistake in that. Aufrecht in his Bodleian

Catalogue gives the same date of the composition of the text, that is, 1572 A.D.

Śaka 1741 is the date of the copying of the present MS., and अश्ववाणशरचन्द्र, Śaka 1557 is the date of the copying of the original from which this is copied.

## 2701.

6506. मुहूर्त्तचिन्तामणिः । *Muhūrttacintāmaṇiḥ.*

*By Rāma Daivajña, younger brother of Nīlakaṇṭha, son of Ananta, and grandson of Cintāmaṇi, of Dharmapura (on the Narmadā).*

*With the author's own commentary, entitled Pramitākṣarā.*

Substance, country-made paper 9½ × 4¼ inches. Folia, 128. In Tripāṭha form. Character, Nāgara. Date, Saṃvat 1771. Appearance, fresh. Complete.

*Colophons* :—

Text इति श्रीदैवज्ञरामविरचितो मुहूर्त्तचिन्तामणिः समाप्तः ।

Comm. इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामविरचिते मुहूर्त्तचिन्तामणौ स्वकृतटीकायां प्रमिताक्षरायां गृहप्रवेशप्रकरणं समाप्तम् ग्रन्थश्च समाप्तिमगमत् ।

*Post Colophon* :—

श्रीरस्तु । शुभमस्तु । श्रीमन्नन्दनन्दनचरणारविन्दमकरन्दानन्द-सागराय नमः ।

The following is added by a different hand :—

महीमहीभ्रेभमहीभिराप्ते शके तुलावैक्रम ऊर्ज्जदर्शे ।
असौ सता रूपनारायणेन समाप्तिमाप्तस्त्रिपुरारिपुर्य्याम् ॥

Both text and commentary have been repeatedly published in India.

## 2702.

7727B. *The Same (text only).*

Substance, country-made paper. 10¾ × 5 inches. Folia, 85. Lines, 5 on a page. Character, Jaina Nāgara. Date, Saṃvat 1913. Appearance, fresh. Complete.

*Colophon* :—

इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामविरचिते मुहूर्त्तचिन्तामणौ ग्रहप्रकरणं । समाप्तोयं ग्रंथः ।

*Post Col.* :—

संवत् १९१३ वर्षे शाके १७७८ प्रवर्त्तमाने मासोत्तमे मासे आश्विनमासे कृष्णपक्षे तिथौ नवम्यां ९ चंद्रवासरे ॥ लिपीकृतं आर्य्या जिच्छी १०८ श्रीपूज्यमाजीसाहेब (the name is blurred over with ink.) नाम्ना लिखितं स्वपठनार्थम् ॥ श्रीकाश्यां वाराणस्यां कर्म्मभूमौ श्रीमद्दृष्टागपरीयलक्षा. Here ends the leaf.

## 2703.

7758. *The Same.*

Substance, country-made paper. 10¼ × 5 inches. Folia, 15. Lines, 10 on a page. Character, modern Nāgara. Appearance, fresh. Incomplete.

Up to the Saṃskāra prakaraṇa.

## 2704.

7790A. *The Same.*

Substance, country-made paper. 10½ × 4½ inches. Folia, 7. Lines, 7 on a page. Character, modern Nāgara. Appearance, fresh. A mere fragment.

7A, इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामविरचिते मुहूर्त्तचिन्तामणौ शुभाशुभ-प्रकरणं समाप्तं प्रकरणं प्रथमम् ॥

The MS. ends abruptly.

## 2705.

3957. *The Same.*

Substance, country-made paper. 9½ × 4¼ inches Folia, 19. Lines, 9 on a page. Extent in ślokas, 250. Character, Bengali of the eighteenth century. Appearance, fresh. Complete.

Repeatedly published in India. See I.O. Catal. No. 3019.

## 2706.

10860. *The Same.*

Substance, country-made paper. 10 × 5 inches. Folia, 19. Lines, 9 on a page. Character, Nāgara of the nineteenth century. Appearance, fresh. A fragment.

6B, इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामकृतमुहूर्त्तचिन्तामणौ शुभाशुभं प्रकरणं प्रथमं । अथ नक्षत्रप्रकरणं ॥

There are two stray leaves, marked 48 and 49, belonging to a MS. of Kārtika Māhātmya from the Skanda Purāṇa.

## 2707.

9542. *The Same.*

Substance, country-made paper. 10 × 4 inches. Folia, 109. Lines, 5 on a page. Extent in ślokas, 825. Character, Nāgara. Appearance, tolerable. Complete.

## 2708.

9405. *The Same.*

Substance, country-made paper. 7 × 3½ inches. Folia, 87. Lines, 7 on a page. Extent in ślokas, 1,064. Character, Nāgara. Appearance, old. Complete. With valuable marginal notes.

A well-known Astrological treatise. See Oxf. p. 335B.

## 2709.

9548. *The Same.*

Substance, country-made paper. 9 × 4 inches. Folia, 51. Lines, 10 on a page. Extent in ślokas, 1,020. Character, Nāgara. Date, Saṃvat 1809. Appearance, old. Complete.

*Colophon* :—

इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामविरचिते मुहूर्त्तचिन्तामणौ गृहप्रवेशप्रकरणं समाप्तं ।

शुभं भूयात् । संवत् १८०९ मिति पौषशुक्लाष्टम्यां भृगुवासरे वाराणस्यां लिखितमिदं शिवरामशुक्लेन ।

श्रीरस्तु । शिवमस्तु । श्रीविश्वेश्वरो जयति । श्रीरामः ।

## 2710.

9869. *The Same.*

Substance, country-made paper. 9 × 4½ inches. Folia, 59. Lines, 9 on a page. Extent in ślokas, 1,062. Character, Nāgara. Date, Samvat 1903. Appearance, tolerable. Complete.

Well-known and often noticed.

*Colophon* :—

इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामविरचिते मुहूर्त्तचिन्तामणौ गृहप्रवेशप्रकरणं समाप्तश्चायं मुहूर्त्तचिन्तामणिग्रन्थः ।

संवत् १९०३ समय आश्विनमासे सिते.पक्षे पूर्णमास्यां रविवासरे ।

## 2711.

2981. **प्रमिताक्षरा मुहूर्त्तचिन्तामणिटीका ।**

*Pramitākṣarā, being a comm. on the same.*

*By Rāma Daivājña.*

Substance, country-made paper. 9¾ × 4 inches. Folia, 2 to 11. Lines, 8, 13 on a page. Character, Nāgara of the early eighteenth century. Appearance, discoloured.

A fragment only of the Pramitākṣarā.

## 2712.

2980. *The Same.*

Substance, country-made paper. 12 × 5 inches. Folia, 157. Lines, 11 on a page. Extent in ślokas, 5,100. Character, Nāgara in a mo rn hand. Date, Saṃvat 1874. Appearance, fresh. Complete.

*The Post Colophon Statement* :—

संवत् १८७१ वैशाखमासे कृष्णपक्षे चन्द्रवासरे त्रयोदश्यां १३ श्रीरामाय नमः । श्रीवेणीमाधवाय नमः ।, etc., etc.

See Oxf. No. 788 p. 335B and W. p. 262.

## 2713.

### 339. *The Same.*

Substance, country-made paper. 11 × 5 inches. Folia, 36, the leaves 7, and 35 missing. There are two leaves marked 11. Lines, 11 on a page. Extent in ślokas, 1,540. Character, Nāgara. Appearance, tolerable.

A mere fragment comprising only the first two prakaraṇas.

इति श्रीदैवज्ञानन्तसुत-दैवज्ञरामविरचितायां स्वकृतमुहूर्त्तचिन्तामणिटीकायां प्रमिताक्षरायां नक्षत्रप्रकरणं ।

See Oxf. p. 335B.

## 2714.

### 6440A. *The Same text.*

*With the commentary entitled Marīci by Śrīkṛṣṇa.*

Substance, country-made paper. 11 × 5 inches. Folia, 57 of which the 23rd is missing. Lines, 9 on a page. Extent in ślokas, 1,500. Character, Nāgara of the nineteenth century. Appearance, discoloured. Very nearly complete.

The Text, a work on Smṛti as applied to Jyotiṣa, is well known, having been repeatedly published in India, with the author's own commentary. It was composed at Benares in 1599 A.D.

The commentary under notice was completed in Śaka 1608=1686 A.D. It also supplements, to some extent, the Text :—

गजाभ्रा( ि)ष्ट १६०८ मिते शाके दिवाकरविनोदतः ।
गुरुपादाब्जनिरतः श्रीकृष्णो व्यलिखत् क्रमात् ॥

The commentary begins :—

अथैकदन्तं हरिजीवनञ्च श्रीनीलकण्ठं पितरं च नत्वा ।
करोमि कण्ठाभरणाय योग्यं मुहूर्त्तचिन्तामणिमप्यनर्घं ॥
रतेन बालद्विजपुंगवस्य मणिश्च प्राणोत्कटघर्षणेन ।
कान्तिं समाप्नोति तथैव काव्यं परोत्थसंस्कारवशेन शुद्धिं ॥
अतोऽयमुद्योगभरोऽस्ति जातः श्रीकृष्णनाम्नः प्रथितान्वयस्य ।
तदत्र सुज्ञाः क्रमसंस्कृतं तं मात्सर्य्यमुत्सार्य्य विलोकयन्तु ॥
क्वचित् क्वचित् दृश्यत एव भेदः पाठे स्मृतीनामपि पुस्तकेषु ।
अतः समस्तान् प्रणिपत्य भूयः सम्प्रार्थये मय्यऽविरोधभावम् ॥
निबन्धबन्धे धनिनां कवीनां सत्पंडितानां बहुदर्शिनाञ्च ।
साहित्यमंगं प्रथमं निरस्तं नैवानुरक्तं मयि तत्तदीयम् ॥
श्रीरामदैवज्ञपदारविन्दस्मृतिर्विधत्तां मम बुद्धिवृद्धिम् ।
नैर्म्मल्यमस्यां मम वाचि सम्यक् गोविन्ददैवज्ञगिरोर्पयन्तु ॥
श्रीरामदैवज्ञवरेण नोक्तं यज्ज्ञातकादावुपयोगि मुख्यम् ।
प्राचीनपद्यैस्तदुदाहरामि होरालसानां सुविदां सुखाय ॥

Then begins the Text.

*Colophons* :—

11B, श्रीरामदैवज्ञकृते मुहूर्त्तचिन्तामणौ दैवविदां सुवल्लभे ।
श्रीकृष्णनाम्ना परिसंस्कृतेऽस्मिन्नभूम्मरीचिः प्रथमः शुभाशुभः ॥

16B, ०ग्रन्थोपयोगी व्यगमन्मरीचिः ।

इति श्रीमुहूर्त्तचिन्तामणौ ग्रन्थोपयोगी संज्ञा मरीचिर्द्वितीयः ।

24A, ०नक्षत्रसंज्ञोमिमितो मरीचिः ॥

26B, ०संक्रान्तिसंज्ञोव्विमितो मरीचिः ॥

इति श्रीमुहूर्त्तचिन्तामणौ संक्रान्तिमरीचिस्तुर्यः अथ गोचरमरीचिः ।

28B, ०भूतो मरीचिर्ग्रहगोचराख्यः ॥

33B, ०संस्कारसंज्ञो हि रसो मरीचिः ॥

42A, ०विवाहसंज्ञोद्गिमितो मरीचिः ॥

43A, ०वधूप्रवेशोऽष्टमितो मरीचिः ॥

There is no definition of *Calārcā* anywhere in this work.

*Colophon* :—

इत्यनन्तदेवकृत-राजधर्म्मकौस्तुभे बौधायनोक्त-संक्षिप्त-चलार्चा-विधिः ।

## 2845.

1953. **विष्णुयागपद्धतिः ।** *Viṣṇu-yāga-paddhatiḥ.*

*By Anantadeva, son of Apadeva.*

For the manuscript and the work, see L. 3242. See also Cs. Vol. I, 384 for the work.

*Colophon* :—

इति श्रीमदापदेवसुतानन्तदेवविदुषा कृते । विष्णुयागपद्धतिः समाप्ता ।

*Post Colophon* :—

संवत् १८३० शके १६९५ आषाढ़ शुद्ध ७ शनौ लिः लट्ट जयकृष्णादीक्षितेन ।

The Yāga for the propitiation of Viṣṇu is performed for progeny.

## 2846.

6137. **विष्णुयागप्रयोगः ।** *Viṣṇu-yāga-prayogaḥ.*

*By Mālava Gaṇapati Bhaṭṭa.*

Substance, country-made paper. 10½ × 5 inches. Folia, 262. Lines, 8 on a page. Extent in ślokas, 4,700. Date, Saṃvat 1897. Character, Nāgara, by a modern hand. Appearance, fresh. Complete.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ वैष्णवयागप्रयोग (मु) उच्यते ।

शुक्लैकादश्यां कस्याञ्चित् पूर्व्वं शुभदिने कृतनित्यक्रियः कर्त्ता पवित्रपाणिराचम्य प्राणानायम्य सभार्य्यो देशकालौ संकीर्त्य पुरुष-

सूक्तेन विष्णुसहस्रनाम्ना च जपपूजाहोमात्मकं वैष्णवं यागं कर्तुं तद-
धिकारसिद्ध्यर्थं कृच्छ्रत्रयप्रायश्चित्तं चरिष्ये इति संक[ल्प्यो](ल्पो)क्त-
वपनादिविधिना कृच्छ्रत्रयमाचरेत् ।

*Colophon* :—

इति श्रीमालवग्निवंशाङ्कुरभट्टात्मज सान्नाय्यधुरन्धर-मालवगणा-
धिपतिभट्टकृत-विष्णुयागप्रयोगः समाप्तः ।

*Post Colophon* :—

श्रीसंवत् १८९७ मिः कार्त्तिक वद ७ मं । श्रीकालभैरवाय नमः ।

## 2846A.

7981. **ज्ञातसारसंग्रहः ।** *Jñāta-sāra-saṃgrahaḥ.*

*By Cakrapāṇi Rāmānujadāsa.*

Substance, country-made paper. 8½ × 5½ inches. Folia, 36. Lines, 10 on a page. Extent in Slokas, 500. Character, modern Nāgara. Appearance, fresh. Complete The last two leaves are written in a different hand.

On religious observances, as laid down in Smṛti and Tantra, for a Vaiṣṇava of the Rāmānuja sect.

*Beginning* :—

श्रीमते रामानुजाय नमः । श्रीमते विष्वक्सेनाय नमः ॥
वन्दे विष्णुं परं देवं नारायणमनामयम् ।
क्रियायुक्तं रमानाथं सर्व्वेषां सर्व्वरक्षकम् ॥
लीलया स्वांशकलया जगतां पालनाय च ।
नानावतारं बिभ्रंतं (?) त्रीशं तेषां सनातनम ॥
यं स्तोतुं न क्षमोऽनन्तः सहस्रवदनेन च ।
पञ्चवक्त्रश्चतुर्वक्त्रो गजवक्त्रः षडाननः ॥
यं स्तोतुं न क्षमा माया मोहिता यस्य मायया ।
यं स्तोतुं न क्षमा श्रीश्च जडीभूता सरस्वती ॥
वेदा न शक्ता यं स्तोतुं को विद्वान् चैव वेदवित् ।
तं च स्तोतुमशक्तोऽहं मूर्खो मानी च मूढधीः ॥

आदौ ध्यात्वा गुरुं नत्वा संपूज्य विधिपूर्वकम ।
पश्चात्तदाज्ञया ध्यात्वा इष्टं तं च प्रपूजयेत् ॥
गुरुप्रदर्शितो देवो मन्त्रपूजाविधिर्जपः ।
न देवे न गुरुं दृष्ट्वा तस्माद्देवो गुरुः परः ॥

*Colophon* :---

इति श्रीमद्वीरराघवाचार्यप्रसादेन श्रीचरणोदयात् चक्रपाणिरामानुजदासविरचितोयं ग्रंथो ज्ञातसारसंग्रहः संपूर्णः समाप्तोयं ।

*Post Colophon* :—

यादृशं पुस्तकं, etc., etc.

## 2846B.

75. **सारसंग्रहः ।** *Sāra-saṃgrahaḥ.*

See L. 859.

An anonymous compilation made in the interests of the Vaiṣṇavas, with quotations from various Purāṇas and ancient Smṛtis, as will be seen in the verses from 7 to 15, extracted in L.

Definition of a Vaiṣṇava :—

तदुक्तं पाद्मे :—

ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटपटले लसदूर्ध्वपुण्ड्रा-
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥

## 2847.

10173. **त्रिकालशिवपूजासारम् ।** *Trikāla-śiva-pūjā-sāram.*

*By Saṃkarendra Śaivayati.*

**Substance, country-made paper. 11 × 4¼ inches. Folia, 13. Lines, 9 on a page. Extent in ślokas, 300. Character, Nāgara. Date, Saṃvat 1916. Appearance, fresh. Complete.**

*Colophon* :—

इति श्रीत्रिकालशिवपूजासारं समाप्तं ।

*Post Colophon* :—

श्रीकाशीविश्वेश्वरार्पणमस्तु ॥ लि० दयारामेण शिवप्रीत्यर्थं संवत् १८१६ फाल्गुन शुद्ध ६ शुक्रवार, शुभं भवतु ।

*Beginning* : —

श्रीगणेशाय नमः ।

अथ बौधायनोक्त शिवरहस्यादिग्रन्थोक्त-शिवपूजासारं संगृह्यीत्वा (?) लिख्यते । तत्रादौ प्रातरावश्यककृत्याचमनादि(नां) शुचिर्भूत्वा ततः भस्मधारणविधिः ।

2B, प्रातःकालशिवपूजनमहं करिष्ये ।

*End* :—

इति प्रदोषपूजावर्णनम् ।

आलोड्य सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः ।

इदमेव सुनिष्पन्नं शिवपूजामुदीरितम् ॥

सर्व्वमन्यत्परित्यज्य कर्म्मजालमशेषतः ।

भक्त्या परमया विद्वान् लिङ्गमेकं प्रपूजयेत् ॥

श्रीशङ्करेन्द्रशैवयतिना च शिवप्रीत्यर्थं शैवानां प्रबोधनाय शिवपूजासारं संगृह्यीत्वा रचितम् ॥

## 2848.

2680. **शिवपूजाविधिसंग्रहः ।** *Śiva-pūjā-vidhi-saṃgrahaḥ.*

*By Vallabhendra Sarasvatī.*

Substance, country-made paper. $10\frac{1}{4} \times 5$ inches. Folia, 38. Lines, 11 on a page. Extent in ślokas, 1,000. Character, Nāgara of the seventeenth century. Appearance, discoloured. Complete.

*It begins* :—

श्रीगणेशाय नमः ।

अथ मुख्यं कालाग्निरुद्रं भस्मस्नानविधिं ब्रवीति-प्रोवाच । अथ प्रणवेन विमृज्य तद्भस्म प्रणवमभिमन्त्रितेन तु तेनैव दिग्बन्धं कारयेत् । पुनरपि तेन भस्मीमन्त्रेण अङ्गानि मूर्द्धादीनि उद्धूलयेत् । मलस्नानमिदं ।

*Colophons*:—

11B, इति श्रीबल्लभेन्द्रकृते शिवपूजाविधिसंग्रहे प्रथमो-ऽध्यायः; 19A, इति श्रीबल्लभेन्द्रकृते शिवपूजाविधिसंग्रहे द्वितीयोऽध्यायः; 26B, इति श्रीबल्लभेन्द्रसरस्वतीकृते शिवपूजाविधिसंग्रहे तृतीयोऽध्यायः: 32A, इति श्रीबल्लभेन्द्रकृतशिवपूजाविधिसंग्रहे चतुर्थोऽध्यायः: 38A, इति श्रीबल्लभेन्द्रकृत-शिवपूजाविधिसंग्रहे पञ्चमोऽध्यायः।

All the colophons are scored through by one of the former owners of the manuscript.

## 2849.

1727. **लिङ्गार्चनचन्द्रिका।** *Liṅgārcana-candrikā.*

*By Sādaśiva, son of Gadādhara, son of Viṣṇu of Daśaputra family.*

Substance, country-made paper. 12½ × 5½ inches. Folia, 70. Lines, 10 to 13 on a page. Extent in ślokas, 2800. Character, Nāgara. Appearance, old. Complete.

For a description see L. 1944, in which the work is said to have been composed under the patronage of Rājā Jaya Siṃha.

It is a digest of the rules for the worship of Śiva giving all the details in the same way as in the Rāmārcana-candrikā for the worship of Rāma.

## 2850.

2295. *The Same.*

Substance, country-made paper. 11½ × 4⅞ inches. Folia, 107. Lines, 9 on a page. Extent in ślokas, 2,800. Character, Nāgara. Date, Saṃvat 1907. Appearance, fresh. Complete.

The MS. has at the beginning, an Anukramāṇī in two leaves.

*Post Colophon* :—

संवत् १९०७ चैत्रकृष्णा ६ चंद्रवासर ॥ श्रीकृष्णार्पणमस्तु ॥

## 2851.

2446. *The Same.*

Substance, country-made paper. 9¼ × 4¼ inches. Folia, 134. Lines, 9 on a page. Extent in ślokas, 2,800. Character, Nāgara. Date, Saṃvat 873. Appearance, discoloured. Complete.

*Colophon* :—

इति श्रीपदवाक्यप्रमाणज्ञेन श्रीमद्भट्टपुत्रकुलावतंसेन सदाशिवेन विरचिता लिंगार्चनचन्द्रिका समाप्ता ।

*Post Colophon* :—

संवत् १८७३ माघ शुक्लपक्ष षष्टी गुरुवासरे ।

## 2852.

10477. *The Same.*

Substance, country-made paper. 10½ × 4½ inches. Folia, 72. Lines, 14 on a page. Extent in ślokas, 2,880. Character, Nāgara of the nineteenth century. Appearance, fresh. Complete.

*Colophon* :—

इति श्रीपदवाक्यप्रमाणज्ञ-श्रीमद्भट्टपुत्रकुलावतंसेन सदाशिवेन विरचिता लिङ्गार्चनचन्द्रिका समाप्ता ॥

अवृष्टभावीश्मतिविभ्रमाद्या, etc., etc.

## 2853.

2187. शिवार्चनदीपिका । *Śivārcanadīpikā.*

Substance, country-made paper. 9¼ × 4 inches. Folia, 114. Lines, 8 on a page. Extent in ślokas, 1800. Character, Nāgara. Appearance, tolerable. Complete.

*Last Colophon* :—

इति शिवार्च्चनदीपिका समाप्ता ।

*It begins* :—

अथ स बोधिका लिख्यते (?)

श्रीपाराशरोपपुराणे—

अथातः संप्रवक्ष्यामि देवताधिक्यमादरात्

यस्य स्मरणमात्रेण प्रसीदति महेश्वरः ॥

अचेतनेभ्यः सर्व्वेभ्यश्चेतना अधिका मुने ।

चेतनेषु मनुष्याश्च मनुष्येष्वधिका द्विजाः ॥

... ... ... ... ...

ततोऽधिकतरः साक्षाच्छिवसांबः सनातनः ।

तदन्यद्विश्वमीशानः स तु विश्वाधिकः शिवः ॥

It is a voluminous compilation about the worship of Siva. Its age might be inferred from the fact that it quotes from Bhāṭṭoji and Kamalākara both belonging to the first half of the seventeenth century.

The authorities consulted :—

1A, पराशरोपपुराणं; 3A, सूतसंहिता, शिवरहस्ये; 5B, शिवधर्म्म-शास्त्रशिररहस्ये; 6B, दीपिका; 7A, सिद्धान्तागमे, सौरसंहिता; 7B, स्कान्दे, अथर्व्वशिरसि, कालाग्निरुद्रोपनिषदि, क्रियासारे; 8A, वायवीय-संहितायां; 9B, एते श्लोकाः कौर्म्मेमात्स्यवाशिष्ठलिङ्गाद्यनेकग्रन्थस्थाः शैवसिद्धान्तग्रन्थे संगृहीता लिखिताः; 11B, शिवधर्म्मे, वाशिष्ठलैङ्गे; 13B, जाबालोपनि०, 14A, देवीभागवते; 14B, शिवाराधनदीपिका; 15B, पुरश्चरणचन्द्रिकायां; 16B, तन्त्रचन्द्रिका; 17A, विश्वावसुः; 18B, काशीखण्डे; 19B, सारसंग्रहे; 20A, ब्रह्मोत्तरखण्डः; 23B, शिवगीता; 25B, शिवागमे; 34B, ज्ञानमाला; 35A, भविष्यम्; 35B, सनत्कुमारोपपुराणे; 36A, आदित्यपुराणे; 39A, जाबालवादिनः; 40B, विष्णुधर्म्मोत्तरः; 42A, नृसिंहपुराणे; 42B, प्रयोगसारे; 44A,

ब्रह्माण्डपुराणे, शातातपश्रुतिः; 46A, कामिके; 47A, पुरुषार्थप्रबोधे भविष्ये: 47B, शैविकायां: 48B, एतेन शालग्राम-सान्निध्य एव शैवनिर्माल्यं ग्राह्यं अन्यथा न ग्राह्यमिति लिखितत्वादिगौड़ग्रन्थनिर्णयसिन्धु-भट्टोजिदीक्षितग्रन्थाश्च परास्ताः; 52A, राघवभट्टीयां; 53A, शिवरहस्य शारदातिलकयोः: 54A, पद्मपुराणे; 67A, अनुशासनपर्व्वणि; 78B, शिवसंहितायां; 79B, शङ्करसंहितायां; 80A, ब्रह्मवैवर्त्ते; 88B, गौतमीतन्त्रे; 91B, शिवरहस्ये, व्रतनिर्णये; 107A, योगवाशिष्ठे; 114A, गारुड़े, निःश्वाससंहितायां: 114B, हेमाद्रौ ।

## 2854.

6534. **पार्थिवार्च्चनदीपिका ।** *Pārthivārcana-dīpika.*

*By Kāśīnātha.*

Substance, country-made paper. 11 × 6 inches. Folia, 130. Lines, 10 on a page. Written on one side only. Extent in ślokas, 600. Character, modern Nāgara. Appearance, fresh. Complete. Date, Samvat, 1961.

*Colophon:*—

इति श्रीमद्धड़ोपनामक-जयरामभट्टसुत-वाराणसीगर्भसम्भव-काशीनाथविरचिता पार्थिवार्च्चनदीपिका समाप्ता ।

*Post Colophon:*—

मालवीयबालमुकुन्दस्येदं पुस्तकम् । संवत् १९६१ मोः श्रावण वदी ४ ।

*Beginning:*—

श्रीगणेशाय नमः । श्रीमेधादक्षिणामूर्त्तिगुरुभ्यो नमः ।

ज्योतिर्मात्रसदानन्दनिर्म्मलज्ञानरूपिणे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥
नत्वा श्रीशङ्कराचार्य्यचरणाम्भोरुहद्वयम् ।
काशीनाथः प्रतनुते पार्थिवार्च्चनदीपिकाम् ॥

## 2855.

### 6523. पक्षप्रदोषार्चनचन्द्रिका ।

*Pakṣa-pradoṣārcana-candrikā.*

*By Kāśīnātha, son of Jayarāma Bhaṭṭa and Vārāṇasī.*

Substance, country-made paper. 11 × 5 inches. Folia, 20. Lines, 8 on a page. Extent in ślokas, 340. Character, Nāgara by a modern hand Appearance, fresh. Complete.

A treatise on the worship of Śiva with his consort at dusk on the thirteenth day of the moon.

*Beginning* :—

श्रीगणेशाय नमः । श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः ।

वाराणसीमहं वंदे सच्चिदानंदरूपिणीम् ।

मातृरूपेण सततं सद्भावेऽखिलेष्टदाम् ॥

दक्षिणामूर्त्तिपादाब्जभ्रमरायितमानसः ।

काशीनाथः प्रतनुते प्रदोषार्चनचन्द्रिकाम् ॥

तत्रादौ प्रदोषमहिमा स्कान्दे । ब्रह्मोत्तरखण्डे—

सत्यं ब्रवीमि परलोकहितं ब्रवीमि ।

सारं ब्रवीम्युपनिषद्धृदयं ब्रवीमि ॥

संसारमुल्बणमसारमवाप्य जन्तोः ।

सारोयमीश्वरपदाम्बुरुहस्य सेवा ।

ये नार्चयन्ति गिरिशं सहति प्रदोषे

अभ्यर्चितं शिवपदं प्रणमन्ति नान्ये ॥

... ... ... ...

ते जन्मजन्मसु भवन्ति नरा दरिद्राः ।

2A, अथ प्रदोषस्वरूपनिर्णयः । हेमाद्रौ विश्वादर्शे—

प्रदोषोस्तमयादूर्द्ध्वं घटिकात्रयमुच्यते ।

गौडग्रन्थे तु दण्डद्वयात्मक एव प्रदोष उक्तः ॥

2B, तत्र प्रदोषव्यापिनी त्रयोदशी ग्राह्या ।

4A, इति पक्षप्रदोषविधिः । अथ पक्षप्रदोष-पूजाप्रयोगः ।

*Colophon* :—

इति श्रीमद्भडोपनामकजयरामभट्टसुतत्तारागणीगर्भसम्भव-काशीनाथविरचिता पञ्चप्रदोषार्चनचन्द्रिका समाप्ता ।

*Post Colophon* :—

मालवीयबालमुकुन्दस्येदं पुस्तकम् ॥

## 2856.

### 9951. पार्थिवशिवपूजाप्रयोगः ।

*Pārthivā-Śiva-pūjā-prayogaḥ.*

Substance, country-made paper. 11 × 4½ inches. Folia, 6. Lines, 8 on a page. Extent in ślokas, 100. Character, Nāgara. Appearance, tolerable. Complete.

A religious treatise on the worship of an earthen image of Śiva, according to Baudhāyana.

## 2857.

### 2448. पार्थिवशिवलिङ्गपूजाविधिः (स्तोत्रञ्च) ।

*Pārthiva-śiva-liṅga-pūjā-vidhiḥ, with Stottra.*

Substance, country-made paper. 9 × 4 inches. Folia, 4. Lines, 9 on a page. Extent in ślokas, 60. Character, Nāgara of the nineteenth century. Appearance, fresh. Complete.

*It begins* :—

आचम्य भस्मरुद्राक्षधारणं कृत्वा पुनराचम्य देशकालौ संकीर्त्य मम आत्मनः पुराणोक्तफलप्राप्त्यर्थं मम दीर्घायुःसुपुत्रावाप्त्यर्थं श्रीसाम्बशिवप्रीत्यर्थं पार्थिवलिङ्गपूजनमहं करिष्ये ।

The Pūjāvidhi ends in leaf 3A.

Then a Stottra begins :—

पार्व्वतीवल्लभं स्तुत्वा स्तोत्रेणानेन भक्तितः ।

ईश्वर उवाच ।

नम ॐकाररूपाय नमोऽक्षरवपुर्भृते ।
नमो नादात्मने तुभ्यं नमो विन्दुकलात्मने ॥

अनिललिङ्गरूपाय रूपातीताय ते नमः

त्वं माता सर्व्वलोकानां त्वमेव जगतः पिता ।

Stottra ends in leaf 4A :—

नानापराधशतमव्ययमेव शम्भो

कुर्म्मस्तथापि शरणं चरणं त्वदीयं ।

यद्दोषवन्तमपि रक्षति रक्षितासौ

को वा न रक्षति निरागसमिन्दुमौले ॥

The MS. ends with Visarjanam.

## 2858.

2152. **पार्थिवशिवलिङ्गपूजा** । *Pārthiva-śiva-liñga-pūjā.*

Substance, country-made paper. 9½ × 4 inches. Folia, 2. Lines, 10 on a page. Extent in ślokas, 40. Character, Nāgara of the nineteenth century. Appearance, fresh. Complete.

*It begins* :—

अथ पार्थिवपूजा प्रारम्भः । आचम्य देशकालौ संकीर्त्य मम चतुर्विधपुरुषार्थसिध्यर्थं × श्रीसांवसदाशिवप्रीत्यर्थं च यथा मिलितोपचारैः देशकालाद्यनुसारतः पार्थिवलिङ्गपूजनमहं करिष्ये ।

*It ends* :—

तालत्रयं दत्त्वा जले निमज्जयेत् ।

## 2859.

11051. **पार्थिवशिवपूजाविधिः** ।

*Pārthiva-śiva-pūjā-vidhiḥ.*

Substance, country-made paper. 10 × 4 inches. Folia, 2. Lines, 10 on a page. Character, modern Nāgara. Appearance, discoloured. Complete.

*Colophon* :—

इति पार्थिवशिवपूजाविधिः समाप्तः ।

*Beginning* :—

आचम्य प्राणायामः । देशकालौ स्मृत्वा श्रीसदाशिवप्रीत्यर्थं पार्थिवपूजनमहं करिष्ये ।

## 2860.

### 3274.

Substance, country-made paper. 9½ × 4¼ inches. Folia, 12. Lines 7 on a page. Extent in ślokas, 180. Character, Nāgara. Date, Saṃvat 1806. Appearance, discoloured

I.

11B, इति पार्थिवपद्धतिः समाप्ता ।

*Beginning* :—

अथ पुराणमन्त्रेण पार्थिवलिङ्गपूजाविधिरभिधीयते । तत्र मन्त्राः ।

हरो महेश्वरः शम्भुः शूलपाणिः पिनाकधृक् ।
शिवः पशुपतिश्चैव महादेव इति क्रमात् ।

II.

*Colophon* :—

इति रुद्रतर्पणं समाप्तम् ।

*Post Colophon* :—

संवत् १८०६ अश्विन् सुदि ५ गुरौ लिखितमिदं पुस्तकं व्यासहरिरामेण गुजरातिना पंत वैजनाथ अर्थनाय । शुभमस्तु आरोग्यमस्तु । काशिमध्ये विश्वेश्वरसन्निधौ लिखितं शिवार्पणम् ।

**It begins after Pārthiva-paddhati :—**

ॐ नमः शिवाय शिवं तर्पयामि ॐ नमो भवाय भवं तर्पयामि । इत्यादि ।

## 2861.

2414. **पार्थिवपूजाविधिः ।** *Pārthiva-pūjā-vidhiḥ.*

*By Mādhava.*

Substance, country-made paper. 9½ × 4¼ inches. Folia, 4. Lines, 9 on a page. Extent in ślokas, 60. Character, Nāgara of the eighteenth century. Appearance, fresh.

*It begins*:—

अथ पार्थिवपूजाविधिः ।

तत्र क्रमसूचका परिभाषा शिवागमे—

मृदाहरण १ संघट्ट २ प्रतिष्ठा ३ ह्वानमेव च ४ ।
स्नपनं ५ पूजनं ६ चैव पुनश्चैव विसर्ज्जनम् ७ ॥
इति सप्तोपचाराः ।

अथ मन्त्रक्रममाह—

हरो १ महेश्वरश्चैव २ शूलपाणिः ३ पिणाकधृक् ४
पशुपतिः ५ शिवश्चैव ६ महादेवेति ७ कीर्त्तयेत् ॥

हराद्येकैकनाम्ना मृदाहरणाद्येकैकं कर्म्म कुर्य्यादित्यर्थः । यथा प्रथमं सम्यग् स्नात्वा भस्मोद्धूलनं रुद्राक्षधारणं कृत्वा उदीचीं दिशं गत्वा शुचौ देशे भूमिं प्रार्थयेत् ... ... ... ... ... हराय नम इति मन्त्रेण अश्वत्थगर्भशमीमूलप्रदेशात् तदलाभे शुचि-भूमिभागात् केवलाश्वत्थमूलप्रदेशात् शमीमूलप्रदेशाद्वा यथालाभं स्वस्ववर्णविहितमृदाहरणम् ।

1B, अथ काम्ये कश्चिद्विशेष उच्यते ; 2B, अत्र कश्चिद्रहस्यार्थः प्रोच्यते ; 3A, गुह्यायां संकेतः ; 3A, अमुककामनासिद्ध्यर्थं पार्थिवशिवलिङ्गपूजामनेन पञ्चाङ्गाहं करिष्ये ; 4A, अथ ध्यानम् ; अथ आवरणपूजा ;

4B, पार्थिवस्य च लिङ्गस्य यन्मया पूजनं कृतम् ।
तेन श्रीभगवान् रुद्रो वाञ्छितार्थं प्रयच्छतु ॥

## 2862.

2415. *The Same.*

Substance, country-made paper. 9¾ × 4¼ inches. Folia, 5 to 19, the 16th is twice repeated but there is no 18th. Lines, 10 on a page. Extent in ślokas, 375. Character, Nāgara of the eighteenth century. Appearance, fresh.

This MS. seems to be a continuation of the previous number as the 5A begins:—

आवरणपूजा तु गन्धाक्षपुष्पाणि अक्षताश्चादाय कार्या । शिव-पूजायामक्षताः शालितण्डुलास्ते च कणिशता श्विः प्रक्षालिता अभग्नाश्चेति ।

The colophon immediately after runs:—

श्रीसौराष्ट्रसमुद्भूत सारस्वतकुलो वरः ।
लक्ष्मोदये(य)न रचिता माधवेन शिवस्य तु ॥
पार्थिवस्य सपर्य्यति संक्षिप्ता सकलार्थदा ।
भवानीप्राणनाथोऽयं तेन तुष्यतु सर्व्वदा ॥

*In continuation*:—

श्रीवरदमूर्त्तिर्जयति अथ पार्थिवलिङ्गविधानं द्वितीयं किञ्चित् सप्रेषं लिख्यते ।

5A, आदौ स्वसूत्रोक्तं प्रातःस्नानं तं (?) प्रोक्तं शिवस्नानेन मिश्रितं प्रातः-स्नानादिकर्म्मं निरूप्य..............आचमनं कृत्वा......श्रीमहासदाशिवप्रीत्यर्थं पार्थिव-शिवलिङ्गपूजनमहं करिष्ये; 5B, पिण्डीकरणं, करन्यासः, करशुद्धिन्यासः; 6A, अथ ध्यानम्; 7A, अथ करन्यासः ततो ध्यानम्; 7B, इति द्वितीयः पार्थिवलिङ्गपूजाविधिः समाप्तः । अथात्र मूलवचनानि सविस्तराणि वक्ष्यामः । तत्र लिङ्गमहिमा स्कान्दे ।

After the 38th verse, leaf 9B, अथ नानालिङ्गानि; after the 47th verse, leaf 10A, अथ कलौ तु पार्थिवमेव क्षिप्रफलप्रदं नानाकामनासाधकञ्च; after the 142nd verse, leaf 15A, इति संक्षिप्ता पार्थिवपूजा । तदनन्तरे अथ पार्थिवलिङ्गस्य विधानमभिधीयते;

after the 152nd verse, 15B, इति एकादशाणों गणेशमन्त्रः; after the 159th verse, इत्येवं गुरुमन्त्रो दशाक्षरः; after the 185th verse, leaf 16-17, इत्यपि लिङ्गपूजाविधिः. (Here ends the quotation from the Skāndapurāṇa.) Immediately following:— अथ वैदिकभक्तानां पार्थिवार्चा निगद्यते in 6 verses, leaf 17-18B, अथ काम्यविधिः, ऋणमुक्तो भवति, पुत्रवान् भवति; leaf 17-18B, कन्यावान् भवति, द्रव्यागमो भवति, विवाहो भवति, कलहान् मुक्तो भवति, तीर्थयात्रा भवति विद्यावान् भवति; 19A, अपमृत्युपरिहारो भवति, दूरगतस्यागमो भवति, भाग्यवान् भवति; 19B, इत्यन्यः लिङ्गपूजाविधिः।

*The Last Colophon*:—

इति श्रीश्वरसंवादे पार्थिवलिङ्गपूजाविधिः समाप्तः।

## 2863.

2676. **लिङ्गपद्धतिः**। *Liṅga-paddhatiḥ.*

Substance, country-made paper. 9¼ × 5¼ inches. Folia, 21. Lines, 8 on a page. Extent in ślokas, 320. Character, Nāgara. Appearance, discoloured. Complete.

On the worship of Śiva in His phallic emblem.

*It begins*:—

पार्थिवलिङ्गपूजाविधिरुच्यते।

मम सर्व्वकामानां सिद्ध्यर्थे पार्थिवशिवलिङ्गपूजां करिष्ये इति संकल्प्य सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।

भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः॥ इति मृत्तिका ग्रहणम्।

*Colophon*:—

इति लिङ्गपद्धतिः।

## 2864.

### 112. पार्थिवलिङ्गपूजनविधिः ।

*Pārthiva-liṅga-pūjana-vidhiḥ.*

The present MS. has been noticed in L. 916.

*Beginning* :—

ॐ नमः शिवाय ।

कथयस्व महाबाहो लोकानां प्रीतिवर्द्धिकाम् ।

इष्टलिङ्गशिवस्यार्च्चा सूचितां न प्रकाशिताम् ॥

कथयस्वाधुना देव यदि स्नेहोऽस्ति मां प्रति । भैरव उवाच ।

शृणु देवि प्रवक्ष्यामि लोकानामुपकारिणीं इत्यादि ।

*End* :—

अष्टोत्तरात्कार्य्यसिद्धिर्भवत्येव न संशयः ।

सहस्रपूजनाद्देवि लभते वाञ्छितं फलम् ॥

लक्षस्य पूजनाद्देवि शिवत्वमाप्नुयाद्ध्रुवम् ॥

*Colophon* :—

समाप्तश्चेदं ॥

## 2865.

### 2869. पार्थिवशिवलिङ्गपूजाप्रयोगः ।

*Pārthiva-śiva-liṅga-pūjā-prayogaḥ.*

Substance, country-made paper 9 × 4½ inches. Folia, 11. Lines, 9 on a page. Extent in ślokas, 200. Character, Nāgara. Date, Saṃvat 1797. Appearance, discoloured. Complete.

*It begins* :—

अस्य श्रीपार्थिवेश्वरचिन्तामणिविद्यामन्त्रस्य नियन्तामुग्रेश्वकर्षी कामदुघा देवता गायत्री छन्दः श्रीशीघ्रवरदरूपिणी पार्थिवेश्वरचिन्तामणि देवता ह्रीं बीजं क्लीं शक्तिः नमः कीलकं ॐ अमुककामसिद्ध्यर्थं जपे विनियोगः । इत्यादि ।

*It ends* :—

सोद्यापनं व्रतं कृत्वा प्राप्नुयात् परमं फलम् ।
ततः शिवपदं प्राप्य तत्रैव रमते ध्रुवम् ॥

The date and the scribe of the manuscript.

लिखितं शुक्ल॰ रामेश्वरजोईता वास्तव्य ग्राम सिद्धपुरा काश्यां औदीच्य-ज्ञातौ । संवत् १७८७ ता वरषे फाल्गुनवदी १० शनिवारशे लिखीतम् ॥

## 2866.

7916. **पार्थिवेश्वरचिन्तामणिलिङ्गपूजनविधिः ।**

*Pārthiveśvara-cintāmaṇi-liṅga-pūjana-vidhiḥ.*

Substance, country-made paper. 9½ × 4¼ inches. Folia, 30. Lines, 7 on a page. Extent in ślokas, 360. Character, Nāgara. Date, Samvat 1877. Appearance, fresh. Complete.

*Colophon* :—

इति श्रीपार्थिवेश्वरचिन्तामणिलिङ्गपूजनविधिः समाप्तः ।

*Post Colophon* :

संवत् १८७७ मासि॰ कार्त्ति॰ शुक्ल १५ चन्द्रवासरे लिखितं नन्दन उपाध्या काश्यां मध्ये शुद्धपद्धतिः ।

*Beginning* :—

अथ चिन्तामणिपार्थिवपद्धतिः ।

ॐ । अस्य श्रीपार्थिवेश्वरचिन्तामणिमन्त्रस्य दक्षिणामूर्त्तिः ऋषिरनुष्टुप्छन्दः श्रीसदाशिवो देवता, etc., etc., ममाभीष्ट-सिद्ध्यर्थे जपे विनियोगः । अथ करन्यासः ।

## 2867.

2681.

Substance, country-made paper. 8 × 4 inches. Folia, 29. Lines, 8 on a page. Character, Nāgara. Appearance, fresh.

The MS. contains three different works.

(1) प्रदोषे शिवपूजामाहात्म्यम् ।

*Beginning* :—

प्रदोषपूजामूलभूतानि वचनानि ब्रह्मोत्तरखण्डे षष्ठे ऽध्याये तिष्ठन्ति । तानि सौकर्य्यार्थं प्रथमतो लिख्यन्ते ।

This ends in 8A. The other side of the leaf is marked 1 and begins the next work.

(2) प्रदोषपूजापद्धतिः ।

*Beginning* :—

अथ ब्रह्मोत्तरखण्डोक्तप्रकारेण प्रदोषपूजापद्धतिर्लिख्यते ।

पक्षद्वये त्रयोदश्यां दिवा निराहारः सन् मध्याह्ने स्नात्वा शिवपूजां विधाय प्रदोषकालात् पूर्व्वमेव देवस्य पुरतो नवाम्भसा गोमयेनोपलिप्य धौतवस्त्रैर्मण्डपं विधाय वितानाद्यैः फलपुष्पपल्लवाद्यैरलङ्कृत्य वर्णपञ्चकैः पद्ममालिख्य अस्तमयस्य घटिकात्रयात् पूर्व्वं स्नात्वा शुद्धवस्त्रं परिधाय यथैव भाद्धादावुच्छिष्टं श्राद्धार्थं नोपयुज्यते तथैव इत्यादि ॥

This contains 18 leaves and the first side of the 19th. The other side is marked 1 and begins the next work.

(3) उपमन्युकृत-शिवस्तव ।

ॐ शिवाय महेश्वराय शम्भवे पिनाकिने इत्यादि ॥

*Colophon* :—

इत्युपमन्युकृतं स्तवं समाप्तम् ।

## 2868.

83. **शिवपूजापद्धतिः ।** *Śiva-pūjā-paddhatiḥ.*

A manual on the worship of Śiva. For the MS. see L. 821.

*Beginning* :—

श्रीगणेशाय नमः ।

अथ शिवपद्धतिर्लिख्यते ।

ब्राह्मे मुहूर्त्ते चोत्थाय यामिनीचलमुत्सृजेत् ।, etc , etc.

*Post Colophon Statement* :—

एतत् लिपिस्थानं श्रीमालिकासन्निधौ लिखितम् । शुभं भवतु संवत् १८४३ कार्त्तिक पौर्णिमायां चन्द्रवासरे शुभं ।

## 2869.

8961. **पञ्चवक्त्रपूजा** । *Pañca-vaktra-pūjā.*

Substance, country-made paper. 9½ × 4 inches. Folia, 7. Lines, 10 on a page. Extent in ślokas, 200. Character, Nāgara. Appearance, fresh. Complete.

The work is called Śiva-pūjā-paddhati on the obverse of the first leaf. In the colophon, however, it is called Pañca-vaktra-pūjā. All the six faces of Śiva are separately worshipped.

1B, इति पश्चिमवक्त्रपूजनं ; 2A, इत्युत्तरवक्त्रस्य पूजा ; इति दक्षिण० ; 2B, अथ पूर्व्ववक्त्रध्यानम् पू ; 3A, इति ऊर्द्ध्वमस्त० : 3A, इति पातालवक्त्रध्यानम् ।

The details of the worship are given in the rest of the work. The sixth Pātālavaktra seems to be a supplementary one treated of in a very brief manner. Vedic Mantras of *Rudra* are profusely used.

*Beginning* :—

अथ ध्यानम् ॥

प्रालेयामलविंदु० । पश्चिमं ॥ १ ॥

यत्तद्गंगाजलौघैर्हरमुकुटजटाजूटनिर्द्धूतभस्मैः । ? ।

कर्णौ नागाधिराजैः फणिमणिकिरणैश्चन्द्रिकाभिर्विभाति ।

नित्यं ध्यायन् प्रसन्नं शशिकरधवलं शङ्खगोक्षीरवर्णं

सद्योजातस्वयम्भूस्वयमिति भगवान् पश्चिमं चन्द्रमौलेः ॥, etc., etc.

*Colophon* :—

इति पञ्चवक्त्रपूजा समाप्ता ।

## 2870.

4647. गोमयगठितशिवपूजाविधिः ।

*Gomaya-gaṭhita-śiva-pūjā-vidhiḥ.*

Substance, country-made paper. 16½ × 4 inches. Folia, 3. Lines, 7 on a page. Extent in ślokas, 84. Character, Bengali of the nineteenth century. Appearance, fresh.

On the worship of a cowdung image of Śiva, of which the recitation of the text of the Kālāgnirudropaniṣad forms part.

श्रीराम । अथ गोमयगठितशिवपूजाविधिः ।

तत्रादौ श्वेतसर्षपमादाय ॐ वेतालाश्च पिशाचाश्च, etc., etc.

3A, अथ कालाग्निरुद्रोपनिषत् पाठः ॥ यथा ॥ ॐ श्रीमत्कालाग्निरुद्रोपनिषदः सम्वर्त्तको + + + रूपी रुद्रोदेवता, etc., etc.

ॐ अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ ।

*Colophon* :—

इति कालाग्निरुद्रोपनिषत् समाप्ता । ॐ ॥

## 2871.

2872. नृसिंहपरिचर्य्या । *Nṛsiṃha-paricaryā.*

*A part of* वैष्णवधर्म्मानुष्ठानपद्धतिः । *See Cat. Cat. Vol. I.*

*By Kṛṣṇadeva, son of Rāmācārya.*

For the MS. see L. 4232.

## 2872.

5890. नृसिंहार्चनचन्द्रिका । *Nṛsiṃhārcana-candrikā.*

Substance, country-made paper. 9½ × 4½ inches. Folia, 57. Lines, 8 on a page. Extent in ślokas, 850. Character, Nāgara. Date, Saṃvat 1697. Appearance, old and discoloured.

*Beginning* :—

ॐ नमो भगवते श्रीमद्दिव्यलक्ष्मीन्रसिंहाय ।

ॐ श्रीगुरुचरणकमलेभ्यो नमः ।

उपास्महे न्रसिंहाख्यं ब्रह्मवेदान्तगोचरम् ।
भूयोल्लालित (?) संसारच्छेदहेतुं जगद्गुरुम् ॥
ॐ सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्यस्थले ।
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम् ॥
ग्यक्षं चक्रपिणाकसाभयवरान् बिभ्राणमर्कच्छविम् ।
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीन्रसिंहं भजे ॥
वासिष्ठनारदीयाद्या आलोच्यानेकपद्धतीः ।
विधिस्तु मन्त्रराजस्य संक्षेपेणोच्यतेऽधुना ॥

तत्रादौ मण्डलेश्वरं श्रीमद्दिव्यलक्ष्मीन्रसिंह + + +, etc., etc.

28B, इति श्रीन्रसिंहार्चनचन्द्रिकायां संक्षिप्तस्मार्त्तपद्धतौ च अङ्गनिरूपणं नाम प्रथमः पटलः; 37B, इति श्रीन्रसिंहार्चनचन्द्रिकायां स्मार्त्तोपासनायां संक्षिप्तपद्धतौ द्वितीयः पटलः ।

55A, तुलस्यां मापतिं देवमर्चयित्वा यथाविधि
पश्चादागत्य देवेशमपराधान् क्षमापयेत् ।
यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ।
देवोत्सवाद्यदेवाय (?) अप्रणामस्तदग्रतः ॥

*Last Colophon* :—

Beginning of the द्वात्रिंशदपराधः—Dvātrinsadaparādha.

उच्छिष्टे चैव वाशौचे भगवद्वन्दनादिकं
एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणं
× × × × × ×

इति अपराधक्षमापनं । ॐ नमो न्र० द्वात्रिंशत्तु मुख्यास्ते वाराहे विष्णु-नोदिताः तिर्य्यक् सुप्तधरो भुत्वा ह्यकृत्वा दन्तधावनं ।

× × × × × × × × ।

इति वैकुण्ठनाथप्रोक्ता द्वात्रिंशदपराधाः समाप्ताः ।

The colophon of the other work is not found. It closes with the prayer, composed by Vaikuṇṭha Nātha.

*Post Colophon Statement*: –

संवत् १६६७ वर्षे अश्विनमासे शुक्लपक्षे अष्टम्यां तिथौ गुरुवासरे लिखितमिदं पुस्तकम् ।

लेखकपाठकयोः शुभं भवतु । कल्याणमस्तु ।

गुसांइरामाश्रमपठनार्थं परोपकारार्थं च ।

## 2873.

1819. कृष्णार्चनचन्द्रिका । *Kṛṣṇārcana-candrikā.*

Substance, country-made yellow paper. 17 × 5 inches. Folia, 23. Lines, 11 on a page. Extent in ślokas, 500. Character, Bengali. Appearance, fresh. Two chapters only.

This is a distinct work from the Kṛṣṇārcana-candrikā by Ratnapāṇi, noticed in L. 1894.

*It begins* :—

प्रणम्य परमात्मानं सच्चिदानन्दरूपिणम् ।
कुर्व्वे नानाप्रमाणाढ्यां श्रीकृष्णार्च्चनचन्द्रिकाम् ॥

प्रतिमाया वेदप्रमाणता । आथर्व्वणीय-श्रीरामतापनीये अन्यत्र च तन्त्रे ।

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना ॥ १ ॥

रूपकल्पना । रूपस्थानां देवतानां पुंस्त्र्यंशादिकल्पना । इति निबन्धकृद्भिः ।

अथ देवप्रतिमाभेदाः । स्कान्दे ।

शैली दारुमयी लौही लेप्या लेख्या च सैकता ।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥

मत्स्यपुराणे ।

सौवर्णी राजती वापि ताम्री रत्नमयी तथा ।
शैली दारुमयी वापि लौहशङ्खमयी तथा ॥

रीतिका धातुयुक्ता च ताम्रकांस्यमयी तथा ।
शुभदारुमयी वापि देवतार्च्चा प्रशस्यते ॥
रीतिका पित्तलं शुभदारुमयी यज्ञीयकाष्ठसमुद्भवा ॥

The index of the work as given in the manuscript: —

1, प्रतिमायां वेदप्रामाण्यं, देवप्रतिमाभेदाः, तत्फलभेदाः, देवार्च्चने स्थानानि, स्थानभेदे पूजाप्रकाराः; 2A, गृहस्थानां प्रतिमापरिमाणम्, अधिष्ठानभेदे आवाहनविसर्ज्जने, देवपूजाया नित्यत्वविधानम्, तत्फलानि; 2B, केवलजले पूजाविधानम्, देवपूजा अकरणदोषाः, देवतानां अग्रपश्चात् पूजाक्रमः, नित्यानित्य-विचारः; 3A, नित्याकरणे दोषाः, अधिकारी, अथ शालग्रामप्रकरणम्, शालग्रामे सर्व्वदेवादिपूजाविधानम्, शालग्रामे शिवनिर्म्माल्ये न दोषः; 3B, शालग्रामे पूजाफलानि; 4B, गृहे शालग्रामस्थापनफलम्, शालग्रामार्च्चनाकरणे दोषः, कलौ शालग्रामस्य दुर्लभत्वं; 5A, अन्याधिष्ठानापेक्षया अस्य उत्तमत्वं शालग्रामस्य प्रतिष्ठानिषेधः, शालग्रामोत्पत्तिप्रकाराः; 5B, वर्णादिभेदाः; 6A, तासां गुणदोषाः; 6B, तासां पूज्यत्वापूज्यत्वे, तत्प्रश्ने संख्यानियमः, शालग्रामे क्षेत्रनिर्णयः, अथ मूर्त्तिभेदे लक्षणानि, तत्र मत्स्यलक्षणम्; 7A, कूर्म्मचक्रम्; 7B, वराहचक्रम्, लक्ष्मीवराहचक्रं, नृसिंहलक्षणम्, कपिलनृसिंहः; 8A, लक्ष्मी-नृसिंहः, विदारनृसिंहः, सर्व्वतोमुखलक्षणम्, पातालनृसिंहः, आकाशनृसिंहः, जिह्वानृसिंहः; 8B, अधोमुखनृसिंहः, ज्वालानृसिंहः, योगिनृसिंहः, वामन-चक्रम्, दधिवामनः; 9A, त्रिरामचक्रम्, परशुरामः, श्रीरामचक्रम्, राजराजेश्वरः, रघुनाथः, सीतारामः, जानकीरामः, वियोगरामः, रणरामः; 9B, वीररामः, विजयरामः, कवित्तरामः, शिवरामचक्रम्, बलभद्रः, बलरामः, बुद्धः, कल्किः, इति दशावताराः अथ श्रीकृष्णचक्रम्, गोपालचक्रम्, मदनगोपालचक्रम्; 10A, सन्तानगोपालः, गोवर्द्धनगोपालः, लक्ष्मीगोपालः; 10B, अथ लक्ष्मीनारायणः लक्ष्मीजनार्द्दनः; 11A, नारायणः, लक्ष्मीपतिः, श्रीधरचक्रं; 11B, दामोदर-चक्रम्, केशवचक्रम्, माधवचक्रम्, गोविन्दचक्रम्, विष्णुचक्रम्; 12A, अच्युत-चक्रम्, मधुसूदनम्, हरिलक्षणम्, अनन्तचक्रम्; 12B, शेषचक्रम्, प्रलम्बचक्रम्, विष्णुपञ्जरचक्रम्, सुदर्शनचक्रम्, वासुदेवचक्रम्; 13A, संकर्षणचक्रम्, प्रद्युम्न-चक्रम्, लक्ष्मीप्रद्युम्नचक्रम्, अनिरुद्धचक्रम्, पुरुषोत्तमचक्रम्; 13B, अधोक्षज०;

13B, उपेन्द्र०, योगेश्वर०, पुण्डरीकाक्ष०, योगमूर्त्तिचक्रम्, त्रिविक्रमचक्रम्, चतुर्भुजचक्रम्, गदाधर०, 14A, हिरण्यगर्भ०, कालीयमर्द्दन०, चानूरमर्द्दन०, समन्तचारी, कंसमर्द्दनचक्रम्, वैकुण्ठ०, पद्मनाभ०, हृषीकेश०; 14B, गरुड़ध्वज-लक्ष्मीपतिः, वटपत्रशायी, विश्वम्भर०, विश्वरूप०, पीताम्बर०, चक्रपाणि०, हरिहर-चक्रम्; 15A, शङ्करनारायण०, शिवराम०, नरनारायणचक्रम्, रूपिनारायण०, नवमूर्त्ती, हयग्रीवचक्रम्; 15B, परमेष्ठीचक्रम्, चतुर्मुखचक्रम्, जगद्योनि०, बजरूपी, स्वयम्भु०, पितामह०; 16A, महावीरश्वचक्रम्, शिशुमारलक्षणम्, हंसचक्रम्, परहंसचक्रमम्, सूर्य्यलक्षणम्, हैहयचक्रम्, गरुड़चक्रम् इति १०८ चक्रभेदाः; 16B, शालग्रामशिलाद्वादशादिसंख्याभेदे पूजाफलम्, शिलादि-विक्रयादिकरणे दोषाः, शालग्रामशिलां स्पृष्ट्वा मिथ्याशपथकरणे दोषाः, शालग्रामशिलायां तुलसीविच्छेदकरणे दोषाः, शालग्रामशिलासमीपे तुलसी-संस्थापनफलम्, शालग्रामसमीपे मरणफलम्; 17A, शालग्रामशिलां हृदये निधाय मरणफलम्, स्त्रीशूद्रादीनां पूज्यत्वापूज्यत्वनिर्णयः; 17B, शालग्राम-शिलादानफलम्; 18A, अथ शालग्रामशिलादानपद्धतिः; 19A, शालग्रामपूजा-निर्वाहाय भूम्यादिदानफलम्—इति प्रथम परिच्छेदः; 19A, गोमतीचक्रक्षेत्र-निर्णयः; 19B, शालग्रामचक्रद्वारवतीचक्रयोरेकत्र अवस्थानफलम्, द्वारवतीचक्र-माहात्म्यं, तेषां वर्णादिभेदे फलम्, चक्रभेदे मूर्त्तिभेदाः; 20A, चक्रभेदेन मूर्त्तिभेदे फलभेदाः; 20A, विशेषफलम्; 20B, शालग्रामशिलासमीपे द्वार-वतीचक्रस्य नित्यसंरक्षणा; 20B, द्वारवतीचक्रपूजने संख्यानियमः, अथ शिव-लिङ्गप्रकरणम्, स्वयम्भुलिङ्गलक्षणम्; 21A, अथ बाणलिङ्गलक्षणम्; 21B, अथ बाणलिङ्गपरीक्षा, बाणलिङ्गार्थः, गुणदोषाः; 22A, अथ फलम्, बाण-लिङ्गप्रतिष्ठावाहनादिकं नास्ति, अथ गौरीपट्टः; 22B, अथ बाणलिङ्गचिह्न-विशेषे मूर्त्तिभेदाः ११ प्रकारः; 23A, अथ रौद्रलिङ्गलक्षणम्, अथ शिवनाभि-लक्षणम्, अथ दैवलिङ्गलक्षणम्, आर्षलिङ्गलक्षणम्, मानुषलिङ्गलक्षणम्, तत्र स्वभावोत्थलक्षणम्, स्फटिकलिङ्गलक्षणम्, पीठनिरूपणम् ॥ द्वितीय परिच्छेदः समाप्तः ॥

The authorities quoted are:—

1A, आथर्व्वणीये श्रीरामतापनीये, स्कान्दे, मत्स्यपुराणे, गौतमीये भागवतैकादशे, वाराहे, सम्मोहनतन्त्रे; 2A, गौतमीये, ब्रह्मपुराणे मरीचिः,

कौर्म्मे, भविष्ये, देवीपुराणे, ब्रह्मवैवर्त्ते, नारदीये, विष्णुरहस्यम्, कालिकापुराणम्, संवत्सरप्रदीपे ; 3A, विष्णुपुराणम्, गीता, लिङ्गपुराणे, पाद्मम्, कार्त्तिकमाहात्म्यम् ; 4B, वृहन्नारदीये, गारुड़े ; 5B, मत्स्यसूक्ते, आग्नेये ; 6A, ब्रह्माण्डपुराणम् ; 7A, वीरमित्रोदयः ; 7B, वैश्वानरसंहिता ; 10A, धर्म्मसंहिता ; 10B, पुराणसंग्रहः ; 17A, पूजारत्नाकरः ; 17A, वृहन्नारदीयम् ; 17B, माघमाहात्म्यम् ; 19B, योगपारिजाते ; 20A, प्रयोगपारिजाते, कौशिलपञ्चरात्रे ; 20B, द्वारकामाहात्म्यम्, सिद्धान्तशेखरः ; 21A, दीपिका, शैवसिद्धान्तशेखरः, कालोत्तरे ; 22A, याज्ञवल्क्यसंहिता, हेमाद्रयाहृतलक्षणसमुच्चये, केदारखण्डे ; 23B, शिवलक्षणसमुच्चयः, विष्णुधर्म्मोत्तरे, कालोत्तरे ।

## 2874.

6526. **कृष्णपूजातरङ्गिणी ।** *Kṛṣṇa-pūjā-taraṅgiṇī.*

*By Kāśinātha, son of Jayarāma Bhaṭṭa.*

Substance, country-made paper. 11×5 inches. Folia, 13. Lines, 8 on a page. Extent in ślokas, 200. Character, modern Nāgara. Appearance, fresh. Complete.

*Colophon* :—

इति श्रीमद्भडोपनामक-जयरामभट्टसुतवाराणसीगर्भसम्भव-काशीनाथविरचिता कृष्णपूजातरङ्गिणी समाप्ता ।

*Post Colophon* :—

मालवीयबालमुकुन्दस्येदं पुस्तकम् ।

On the daily duties of a worshipper of Śrīkṛṣna.

*Beginning* :—

श्रीगणेशाय नमः । श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः ।
कृष्णं कलिमलमथनं कृतजननिधिमथनं नूनं ।
कविक्कतगुणगणकथनं वन्दे कंसादिमथनं नाथम् ॥
दक्षिणामूर्त्तिपादाब्जभ्रमरीभूतमानसः ।
काशीनाथः प्रतनुते कृष्णपूजातरङ्गिणीम् ॥

प्रातरुत्थाय शिरसि संस्मरेत् पद्ममुज्ज्वलम् ।
कर्पूराभं स्मरेत्तत्र श्रीगुरुं तत्स्वरूपिणम् ॥
सुप्रसन्नं लसद्भूषाभूषितं शान्तिभूषितम् ।
वराभयकरं नित्यं नमस्कृत्यामुना यजेत् ॥

ॐ हंसः सोऽहं श्रीअमुकानन्दनाथगुरुभ्यो नमः, etc., etc.

## 2875.

3126. गोपाल[पूजा]पद्धतिः । *Gopāla-pūjā-paddhatiḥ.*

*By Nimānuja.*

Substance, country-made paper. 7 × 5 inches. Folia, 9. Lines, 8 on a page. Extent in slokas, 110. Character, Nāgara. Appearance, fresh. Complete.

A treatise on the worship of Gopāla a form of Kṛṣṇa.

*It begins* :—

ॐ श्रीगोपीजनाभ्ये प्रवदेद्वल्लभा[म]यिसुन्दरीम् ।
अयं दशाक्षरो मन्त्रे वृष्टा (?) दशफलप्रदः ॥

अथ पूजाप्रकरणम् ।

*Colophon* :—

इति श्रीनिमानुजकृतं गोपालपद्धति सम्पूर्णा शुभमस्तु ॥

## 2876.

8643. रामार्चनसोपानम् । *Rāmārcana-sopānam.*

*By Sivalāla Pāṭhaka.*

Substance, country-made paper. 10 × 5 inches. Folia, 52. Lines, 7 on a page. Extent in slokas, 1,000. Date, Samvat 1890. Character, Nāgara, old. Complete.

Complete in 52 leaves. A liturgical work compiled in Saṃvat 1890 in Kṛṣṇapakṣa of the month of Srāvana,

*Beginning* :—

श्रीगणेशाय नमः। स्वस्ति श्रीजानकीरमणचरणसरोजाभ्यां नमः सीतारमणपादाब्जयुगलमकरन्दपानलुब्धोऽहं रामार्चनप्रयोगं वक्तुं गुरुपादपङ्कजं नौमि। तत्र तावल्लब्धाराध्यपादगुर्वनुग्रहः साधको- रात्रेश्चरमप्रहरस्योत्तरार्द्धे दत्ताङ्गेन शयनादुत्थाय स्वहृत्कमल- कर्णिकामध्ये प्रस्फुरत्कोटिदिवाकरप्रभाभासुरं श्रीरामं चिन्तयेत्, etc., etc.

*Colophon* :—

ॐ तत्सदिति श्रीमज्जानकीरमणचरणकमलमकरन्दलुब्धेन पाठकशिवलालशर्म्मणा विरचितः श्रीरामार्चनसोपानः समाप्ति- मगमत्। श्रीरस्तु शुभं श्रीरामार्पणमस्तु।

*Post Colophon* :—

संमत १८६० मासानां मासोत्तमे मासि श्रावणमासे कृष्णे पक्षे।०।

## 2877.

2924. **रामसपर्य्यासोपानम्।** *Rāma-saparyā-sopānam.*

*By Śivalāla Pāṭhaka.*

Substance, country-made paper. 12×4 inches. Folia, 21. Lines, 7 on a page. Extent in ślokas, 460. Character, Nāgara. Date, Saṃvat 1863. Appearance, fresh. Complete.

*Colophon* :—

इति श्रीसीतारमणपदाब्जमकरन्दलुब्धेन पाठकशिवलाल- शर्म्मणा विरचितः संक्षिप्त-श्रीरामसपर्य्यासोपानः समाप्तिमगमत्।

*Post Colophon* :—

संवत् १८६३।

वरीयसा पदा स्वामिन् पदवीमवधारय।

आगत्य शयनागारं सीतया सह राघव॥

पर्य्यङ्के विमले प्रशस्तफलके भोगीन्द्रचिन्ताङ्कके
स्वच्छप्रच्छदभावके मृदुशिरःस्थानोपधानाधिके ।
उन्मीलन् कुलशीलया दयितया श्रीसीतया सङ्गते
प्रीते नित्यमगण्यपुण्यफलदः श्रीकोशलेन्द्रो नृपः ॥

Mangalācaraṇa and object of the work :—

सीतारामगणपदाब्जप्रगलन्मकरन्दपानलुब्धोऽहम् ।
गुरुपादाब्जं नत्वा कुर्व्वे श्रीरामपूजने सरणिम् ॥

तत्र तावत् लब्धश्रीगुर्व्वनुग्रहः साधको ब्राह्मे मुहूर्त्ते दक्षाङ्गेनो-
त्थाय स्वमूर्द्ध्नि सहस्रदलकर्णिकायां द्विभुजं वराभयकरं .........
ध्यात्वा—
अज्ञानतिमिरान्धस्येत्यादि ।

*It ends* :—

ततश्चरणोदकं गृहीत्वा स्तोत्रकवचादि पठित्वा संसारमुद्रया
स्वहृदयकमले देवं संस्थाप्य श्रीरामप्रेमार्द्रचित्तो विहरेदिति
दिक् ।

## 2878.

5802. *The Same.*

Substance, country-made paper 10 × 4¼ inches. Folia, 28 of which the first is missing. Lines, 8, 9 on a page. Extent in ślokas, 450. Character, Nāgara. Date, Samvat 1860. Appearance, fresh. Complete.

*Colophon* :—

इति श्रीसीतारामगणपादाब्जमकरन्दलुब्धेन पाठकशिवलाल-
शर्म्मणा विरचितः संक्षिप्तश्रीरामसपर्य्यासोपानः समाप्तिमगमत् ।

*Post Colophon* :—

संवत् १८६० शाके १७२५ कार्त्तिक वदी २ रविवासरे
इदं पुस्तकं लिखितम् ।

श्रीरामचन्द्रो जयति ।

## 2879.

10475. *The Same, though called* (**संक्षिप्त**) ।

Substance, country-made paper. 9½ × 4½ inches. Folia, 24. Lines, 9 on a page. Extent in ślokas, 440. Character, Nāgara. Date, Saṃvat 1882. Appearance, old and discoloured. Complete.

*Colophon* :—

इति श्रीसीतारमणपदाब्जमकरन्दलुब्धेन पाठकशिवलाल-शर्म्मणा विरचितः संक्षिप्तः श्रीरामसपर्य्यासोपानः समाप्तिमगमत् ।

*Post Colophon* :—

संवत् १८८२ माघशुक्ल १० भृगुवासरे ।

A treatise on the worship of Rāma.

*Beginning* :—

सीतारमणपदाब्जप्रगलन्मकरन्द[पान]लुब्धोऽहं ।

## 2880.

10454. **रामार्चनोपयोगिसमयाह्निकम्** ।

*Rāmārcanopayogi-samayāhnikam.*

*By Śivalāla Pāṭhaka.*

Substance, country-made paper. 12 × 5¼ inches. Folia, 70. Lines, 9 on a page. Extent in ślokas, 1,540. Character, Nāgara. Date, Saṃvat 1870. Appearance, fresh. Complete.

Ācāras and proper times in connection with the worship of Śrī Rāmacandra, compiled in Saṃvat 1868.

*Beginning* :—

श्रीगणेशाय नमः ॥

चूडावतंसीकृतचन्द्रखण्डं गौरीकरोल्लालितचारुशुण्डम् ।
भक्तौघविघ्नप्रशमप्रचण्डं भजे निजे चेतसि वक्रतुण्डम् ॥
अनल्पं संजल्पन् किमपि किमपि स्मेरवदनः
चिरं शुभ्रचन्द्राभरणकिरणां (?) कौस्तुभमणिं ।

मनोज्ञः कौशल्यां जितमयनः उत्तानशयनः
जलबीतोवीणां दशरथकुमारः श्रयतु मे ॥
... ... ... ... .. ...

*The object of the work* :-

3A. नित्यकर्म्माण्यनुष्ठाय प्रयतः शुद्धमानसः ।
भक्तिश्रद्धासमायुक्तोधिकारी हरिपूजने ॥
अतोधिकारसिद्ध्यर्थमाह्निकं समयं तथा ।
ब्रवीमि जानकीनाथसमर्च्चनसमृद्धये ॥

दक्षिणामूर्त्तिसंहितायां ।
प्रातः शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुं ।
प्रसन्नवदनं शान्तं स्मरेत्तन्नामपूर्व्वकम् ॥

41A. इति पाठकशिवलालसंगृहीतानि आचारप्रमाणवाक्यानि प्रयोगाश्च ॥
अथ धर्म्मोपयोगिनी परिभाषा ।
मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

*Colophon* :—

इति श्रीजानकीरमणचरणकमलमकरन्दाभिलाषि–शिवलाल-
पाठकसंगृहीतं वाजसनेयिनां श्रीरामार्च्चनोपयोगिसमयमाह्निकं
समाप्तिमगमत् ॥

समाप्तमाह्निकमिदं वसुकृतवसुचन्द्रके वर्षे भाद्रासिताष्टम्यां गङ्गालोलार्कसन्निधौ ॥

Composed in Samvat 1868.

*Post Colophon* :—

संवत् १८७० ग्रन्थसंख्या १४०० ।

## 2881.

10405. **रामचन्द्रपूजाविधिः ।** *Rāma-candra-pūjā-vidhiḥ.*

**Substance, country-made paper. 11½ × 5 inches. Folia, 9. Lines, 10 on a page. Extent in ślokas, 189. Character, Nāgara of the nineteenth** century. Appearance, fresh. Complete.

112

*Beginning* :—

श्रीरामचन्द्राय नमः ॥

अथ श्रीरामचन्द्रपूजाविधिर्लिख्यते ॥

तत्रादौ स्वस्तिवाचनं कृत्वा प्रथममाचामेत् । तत्र क्रमः ॥

पूर्व्वाभिमुखः केशवाय नमः ।, etc.

8A, तत आत्मसमर्पणं कुर्य्यात् ततः स्तुत्वा स्तुतिमाह रामार्चनचन्द्रिकायां—

श्रीहनूमानुवाच ।

तिरश्चामपि राजेति समवायं समीयुषां ।

यथा सुग्रीवमुख्यानां यस्तमुग्रं नमाम्यहं ॥

*Last Colophon* :—

8B, इति हनूमत्प्रोक्त-मन्त्रराजात्मकस्तवः समाप्तः ।

After the end there are some verses and mantras beginning with,

पूर्व्वादिक्रमतो देवं पूजयेद् गन्धचन्दनैः ।

पवनं चाञ्जनां चैव पूजयेद्दक्षवामतः ॥

## 2882.

8797. **रामपूजातरङ्गिणी ।** *Rāma-pūjā-taraṅgiṇī.*

*By Kāśīnātha.*

Substance, country-made paper. 8½ × 4 inches. Folia, 8. Lines, 16 on a page. Extent in ślokas, 375. Character, Nāgara. Old. Incomplete.

*It begins* :—

दक्षिणामूर्त्तिपादाब्जभ्रमरीभूतमौलिना ।

रच्यते काशिनाथेन रामपूजातरङ्गिणी ॥

ब्राह्मे मुहूर्त्ते चोत्थाय कृत्वा शौचादिकं सुधीः ।

परिधायाम्बरं शुद्धं मन्त्रस्नानं समाचरेत् ॥

तद् यथा—

नमः शिवायै गङ्गायै शिवदायै नमो नमः ।

नमस्त्रिपथगामिन्यै विश्वमूर्त्यै नमो नमः ।

## 2883.

6009. *The Same.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 10. Lines, 17 on a page. Extent in ślokas, 510. Character, Nāgara of the nineteenth century. Appearance, old and discoloured. Complete.

*Beginning*:—

दक्षिणामूर्त्तिपादाब्जभ्रमरीभूतमौलिना ।
प्रोच्यते काशिनाथेन रामपूजातरङ्गिणी ॥
प्रातः प्रातश्चिन्तयेत्तु स्वाभीष्टं श्रीहरिं गुरुम् ।
श्रीगुरुं धवलं ध्यायेत् वरदाभयपाणिनम् ।
रामाभिन्नं ब्रह्मरन्ध्रे सर्व्वाभीष्टफलप्रदम् ।

इति ध्यात्वा ॐ ऐं क्लीं श्रीं हंसः सोहं अमुकानन्दनाथ-श्रीगुरुपादुकां पूजयामि नम इति मनसा संपूज्य—

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

इति नत्वा श्रीरामार्च्चनचन्द्रिकायां—

ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद्रघुनन्दनम् ।
हरे राम हरे राम राम राम हरे हरे ॥
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।

श्रीरामजय रामजय जयराम इति त्रयोदशाक्षरं मन्त्रं दशवारं जपेत् ।

स्वस्तिकाद्यासने ध्यायेद्राघवं स्वस्वरूपिणम् ।
अहं रामो नचान्योस्मि ब्रह्मैवाहं न शो[क]भाक् ।
सच्चिदानन्दरूपोहं नित्यमुक्तस्वभावनात् ।

इति ध्यात्वा अथ अजपासंकल्पः—

अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
तस्याः सङ्कल्पमात्रेण सर्व्वपापैः प्रमुच्यते ॥

*End* :—

अनेन मन्त्रो मन्त्रो जगत्स्वपि न विद्यते ।
अनेनाराधितो रामः प्रसीदत्येव सत्वरम् ॥
रामेति परमं जप्यं तारकं ब्रह्मसंज्ञितम् ।
तथाच रामरामेति एतत्तारकमुच्यते ॥
इत्याद्याः श्रुतयः सन्ति स्मृतयश्च सहस्रशः ।
एतदेवाविमुक्ते श्रीरुद्रः कथयति स्वयम् ॥

*Colophon* :—

इति श्रीमद्भूडोपनामकशिवरामभट्टात्मज-जयरामभट्टाभिध-शिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-काशीनाथविरचिता रामपूजा-तरङ्गिणी समाप्ता ।

After the colophon, quoted above, there are two verses offering Arghya to Rāma.

The authorities quoted and consulted :—

1, रामार्चनचन्द्रिका ; 2A, मेरुतन्त्रे ; 2B, बृहन्नारदीये : 7B, त्रैलोक्य-सम्मोहनतन्त्रे ; 7B, प्रयोगपारिजाते मरीचिः, भविष्ये, अगस्त्यः : 8B, स्कान्दे, ज्ञानमालायां, सिद्धान्तशेखरे, संग्रहे, अस्मन्मातामहकृतसंग्रहे ; 9B, स्कान्दे तारकामाहात्म्ये ।

## 2884.

2642. **रामपूजापद्धतिः ।** *Rāma-pūjā-paddhatiḥ.*

Substance, country-made paper. 11 × 4½ inches. Folia, 8. Lines, 12 on a page. Extent in ślokas, 250. Character, Nāgara of the eighteenth century. Appearance, discoloured. Complete.

*It begins* :—

श्रीगुरुं सच्चिदानन्दं संसारार्णवतारकम् ।
श्रीरामरूपिणं मूर्ध्नि भावयेच्च पुनः पुनः ॥ १ ॥

साधको ब्राह्ममुहूर्ते उत्थाय रात्रिवासः परित्यज्य बद्धपद्मासनः शिरस्यधोमुखसहस्रदलकमलशुभ्रवर्णकर्णिकान्तस्थ-चन्द्रमण्डलान्त-र्गतहंसपीठे श्वेतवर्णवराभयकरं श्वेतमाल्यानुलेपनं द्विभुजं द्विनयनं

स्वप्रकाशस्वरूपं शान्तं प्रसन्नमानसं स्वात्मोल्लसितसुरत्नप्रभा स्वप्रकाशस्वरूपया सहितं दिव्याभिषेकेण गुरुसंप्रदायानुगतस्वत-नामपूर्व्वक-श्रीरामस्वरूपिणं निजगुरुं विभाव्य मानसोपचारैः संपूजयेद्यथा तं पृथिव्यात्मकं गंधं समर्पयामि ॥ इत्यादि ॥

*It ends:*—

इति प्राणायामऋष्यादिकराङ्गन्यासं विधाय मूलेन चार्घ्यार्पणं कृत्वा शेषं निर्म्माल्यं नैवेद्यं भक्तेभ्यो दत्त्वा किंचित् स्वयं गृहीत्वा सुखं विहरेदिति ।

*Colophon*:—

इति श्रीरामपद्धतिः ।

Then a line more about Puraścaraṇa.

## 2885.

5851. **रामार्चनपद्धतिः ।** *Rāmārcana-paddhatiḥ.*

Substance, country-made paper. 7×3½ inches. Folia, 108. Lines, 8 on a page. Extent in ślokas, 1,300. Character, Nāgara of the nineteenth century. Appearance, fresh. Complete.

*Beginning*:—

श्रीराम ।

ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद्रघुनन्दनम् ।
रामरामेति रामेति तारकाख्यं परं शुभम् ॥
गुर्व्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथिरुजो यो हरीन्द्रानुजाभ्यां ।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषा रोपितभ्रूविजृम्भ-
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोवतारः ॥

18B, इति दिनाद्यभागकृत्यम् ; इति द्वितीयदिनभागकृत्यम् ।

*Last Colophon*:—

इति रामार्चनपद्धतिः समाप्तं ।

## 2886.

9149. **श्रीराममन्त्रपटलः ।** *Śrīrāma-mantra-paṭalaḥ.*

Substance, country-made paper. 12 × 6 inches. Folia, 5. Lines, 18 on a page. Extent in ślokas, 150. Character, Nāgara. Date, Saṃvat 1950. Appearance, tolerable.

See Oxf. 299B.

*The Colophon* :

इति श्रीराममन्त्रपटलं सम्पूर्णं । शुभमस्तु । [संवत् १९५० लिपीकृतं वैशाक वदी तिथिद्वादसी भौमवासरानुतागं । लिखितं सिन्धदेशे हेरासमालनके ब्रह्मघाटमध्ये ।

## 2887.

10624. **रामपट्टाभिषेकः ।** *Rāma-paṭṭābhiṣekaḥ.*

Substance, country-made paper. $10\frac{1}{2} \times 5\frac{1}{2}$ inches. Folia, 11. Lines, 11 on a page. Extent in ślokas, 264. Character, Nāgara of the eighteenth century. Appearance, fresh. Complete.

On the worship of Rāma with his associates, as a concluding ceremony of the recital of the Rāmāyaṇa.

*Beginning* :—

श्रीरामाय नमः ॥

अथ श्रीरामपट्टाभिषेकविधानप्रारम्भः ।

वशिष्ठो वामदेवश्च जावा-[लि]स(री)रथ कश्यपः

भृगुः कण्वः पुलस्त्यश्च कपि[लः] पिप्पलस्तथा ॥

... ... ... ... ... ...

... ... ... ... ... ...

एते च (तास्च) ब्रह्मवेत्तार ऋषयः समुपागताः ।

आलोच्य सर्व्वशास्त्राणि निगमागमसंहिताः ॥

विधानं तेऽब्रुवन् विप्राः रामपट्टाभिषेचने ।

सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते ॥, etc., etc.

3B, इति श्रीवामदेवसंहितायां सकलऋषिप्रोक्तं श्रीरामपट्टाभिषेक-विधानं सम्पूर्णम् ॥

श्रीरामार्पणमस्तु ॥

अथास्य प्रयोगः ॥ शुभमस्तु ॥

ज्योतिःशास्त्रविदुक्ते मुहूर्ते शोभननक्षत्रे......श्रीरामपट्टाभिषेकं करिष्यमाणः कर्ता ब्राह्मे मुहूर्ते चोत्थाय......सीतालक्ष्मणभरत-शत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रीतिद्वारा ऐहिकामुष्मिकफलावाप्त्यर्थं मया कृतं श्रीमद्रामायणपारायणस्य साङ्गतासिद्ध्यर्थं श्रीराम पट्टाभिषेकोत्सवाख्यं कर्म करिष्यमाणः तदादौ स्वस्ति पुण्याह-वाचनं......करिष्ये ।

*It ends:—*

अन्यस्मै ब्राह्मणाय इत्यादि श्रीरामपट्टाभिषेकोत्सवाङ्ग इमां सवत्सां धेनुं श्रीरामप्रीतये तुभ्यमहं संप्रददे ।......

शतं ब्राह्मणान् सम्यग्भोजयेत् ।

*Colophon:—*

इति श्रीरामपट्टाभिषेकोत्सवविधानं सम्पूर्णं ॥

*Post Colophon:—*

श्रीकृष्णार्पणमस्तु शके १६ (?) । श्रीराम २५०० ।

## 2888.

10406. जानकीपूजापद्धतिः । *Jānakī-pūjā-paddhatiḥ.*

Substance, country-made paper. 11×5 inches. Folia, 4. Lines, 9-10 on a page. Extent in ślokas, 72. Character, Nāgara of the nineteenth century. Appearance, discoloured and old. Complete.

*Colophon:—*

इति जानकीपूजापद्धतिः ॥

*Beginning:—*

ॐ नमो गणेशाय ॥

सीतामहोत्सवं वक्ष्ये गौतमीयानुसारतः ।

आदौ निरूपणं जन्मदिनं स्यान्माधवीयकम् ॥

मेषस्थस्थानवस्याख नक्षत्रे शुभदायके।
तत्र प्रादुर्भवा सीता इन्द्रादिभयहारिणी ॥

## 2889.

## 1210. नारायणधर्म्मसारसंग्रहः।

*Nārāyaṇa-dharma-sāra-saṃgrahaḥ.*

Substance, country-made paper. 10½ × 4 inches. Folia, 26. Lines, 9 on a page. Extent in ślokas, 550. Character, Nāgara. Date, Saṃvat 1756. Appearance, tolerable. Complete in eight chapters. The first leaf is missing.

2B, अथावैष्णवाचार्य्यनिषेधः; 6A, अथ कालः; 6B, अथ गुरुलक्षणम्।

*Colophons* :—

6B, इति श्रीनारायणधर्म्मोपनिषत्सारसंग्रहे प्रथमोऽध्यायः,। अथ दीक्षाप्रकारः; 9B, इति श्रीनारायणधर्म्मसारसंग्रहे द्वितीयोऽध्यायः। अथ पञ्चसंस्काराः पृथक् पृथक्; 11A, इति श्रीधर्म्मसारसंग्रहे तिलकमाहात्म्यं नाम तृतीयोऽध्यायः। अथ शङ्खचक्रमाहात्म्यं: 15A, इति श्रीनारायणधर्म्मसार-संग्रहे शङ्खचक्राभ्यां धारणमाहात्म्यं नाम चतुर्थोऽध्यायः; 20B, इति॰ पञ्चमो ध्यायः। अथ नामलक्षणम्; 23A, शालग्रामे अधिकारिणः। अथ पूजाप्रकार ; 23B, ॰सप्तमोऽध्यायः।

*The Last Colophon* :—

वर्णधर्म्मनामाष्टमाध्यायः।

*Post Colophon* :—

श्रीरामचन्द्राभ्यां नमः॥

रस[श](स)रमुनिभूमीयुक्तसंवत्सरे श्री-
पतिचरणसरोजं मानसे सन्निधाय।
लिखितमिदमशेषं पुस्तकं शुक्रवारे
धवलयुगसुतिथ्यां मासचैत्रेण सिद्धं॥

**2890.**

2720.

Substance, country-made paper. 9 × 5 inches. Folia, 21. Lines, 16 on a page. Extent in ślokas, 400. Character, Nāgara of the eighteenth century. Appearance, discoloured. Complete.

The MS. contains directions for the worship of a number of Gods and Goddesses and explanations of some of the Mantras, Vaidika, Paurāṇika and Tantrika, used therein by Tryamba of the Daśaputtra family.

इति दशपुत्रकुलोद्भूत त्र्यम्बकेन कृतोऽयं प्रयोगः समाप्तः ॥

*It begins:—*

सत्यभामाद्यादियुतं प्रसन्नं
पीताम्बरं कौस्तुभभूषिताङ्गं ।
यशोदयालिङ्गितपूर्णदेहं
सत्यव्रतं कृष्णमहं भजामि ॥ १ ॥

इह खलु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थ इत्यामनन्ति न स पुनरावर्त्तत इति श्रुत्या तस्य नित्यत्वावगमात् । ब्रह्मस्वरूपानन्दत्वेनाभ्यर्हितत्वात् .............. स च कर्मणैव तु संसिद्धिमास्थिता जनकादय इत्यादि स्मरणात् कर्म्मैकसाध्य इति मीमांसकाः । कर्मणां चित्तशुद्धिद्वारा परम्परया तत्रोपयोग इत्यन्ये उभयथा कर्म्मानुष्ठानस्यावश्यकत्वात् तस्य च ज्ञानैकसाध्यत्वात् तस्य चोपदेशव्यतिरेकेण असम्भवात् स एवोच्यते ।

It begins with the explanation of the Śrīsūkta:

9A, इति॰जातवेदसमंत्रार्थः; 10A, अथ विद्यामन्त्राः; 10B, इत्येकादशाक्षरगोपालमन्त्राः; 11A, अथ विद्यागोपालमन्त्राः; 11B, अथ लक्ष्मीनारायणः; 12A, अथ बालगोपालमन्त्राः; 12B, अथ राममन्त्राः; 13B, सीताराममन्त्राः; 13B, अथ गोपालसुन्दरी; 14A, अथ वर्णन्यासः; 16B, इति पुत्रप्रदमन्त्राः, अथ कार्त्तवीर्य्यः; 17B, अथ दत्तात्रेयमन्त्राः; 18A, अथ शक्तिप्रणवः; 18A, अथ पुरुषसूक्तव्याख्या ॥

It quotes from some kārikā work and from

शतपथ, सर्व्वानुक्रमभाष्य, बौधायन, पद्मपुराण, नारदपञ्चरात्र, आश्वलायन-गृह्य, दाशरथिसंहिता, लक्ष्मीसंहिता, विष्णुसंहिता, कमलाकरीयपुरश्चरण प्रकरण, स्मृतिरत्नावली, योगयाज्ञवल्क्य।

## 2891.

5869. **पञ्चायतनपूजापद्धतिः।**

*Pañcāyatana-pūjā-paddhatiḥ.*

Substance, country-made paper. 10 × 4¼ inches. Folia, 14. Lines, 8, 9 on a page. Extent in ślokas, 260. Character, Nāgara by a modern hand. Appearance, fresh. Complete.

*Beginning*:—

श्रीगणेशाय नमः।

सुमुखश्चेत्यादि पूर्व्वोच्चरित एवं गुणविशेषणविशिष्टायां शुभ-पुण्यतिथौ श्रीमहाविष्णुप्रमुखपञ्चायतनदेवताप्रीत्यर्थं यथामीलितो-पचारैः पुरुषसूक्तेन विधिना षोडशोपचारैः पूजनमहं करिष्ये।

*End*:

विष्णुकर्मेनोद्भवाः क्रूराः सनकाद्याः शुकादयः।

महाविष्णुप्रसादेन सर्व्वे गच्छन्तु वैष्णवाः॥

बाणरावणचण्डीश-नन्दी भृङ्गिरिटादयः।

सदाशिवप्रसादेन सर्व्व गच्छन्तु शाम्भवाः॥

अनेन यथाज्ञानेन कृतपूजनेन श्रीभगवान् परमेश्वरः प्रीयतां न मम।

*Colophon*:—

इति पूजा समाप्ता।

On the obverse of the first leaf there is Caraṇi cakram and on the reverse of the last leaf Maitrī cakram.

## 2892.

10457. **गणेशार्चनदीपिका।** *Gaṇeśārcana-dīpikā.*

*By Kāśīnātha, son of Jayarāma Bhaṭṭa.*

Substance, country-made paper. 12 × 5¼ inches. Folia, 22. Lines, 9 on a page. Extent in ślokas, 440. Character, Nāgara. Date, Saṃvat 1961. Appearance, fresh. Complete.

*Colophon*: —

इति श्रीमद्भट्टोपनामक-जयरामभट्टात्मजकाशीनाथविरचिता गणेशार्चनदीपिका समाप्ता ।

*Post Colophon*: —

श्रीविद्यागणेशार्पणमस्तु ॥ श्री संवत् १८६१ मिति आषाढ सुदि ४ वार मङ्गल मालवीय-बालमुकुन्दस्य इदं पुस्तकम् ॥

*Beginning*: —

कृत्वाऽऽराजपदद्वन्द्वं निधाय हृदि सुन्दरं ।
काशीनाथः प्रतनुते गणेशार्चनदीपिकां ॥

## 2893.

3500. **संकष्टगणपतिपूजा** । *Saṃkaṣṭa-gaṇapati-pūjā.*

Substance, country-made paper. 7 × 3½ inches. Folia, 6. Lines, 11, 12 on a page. Extent in ślokas, 125. Character, Nāgara of the nineteenth century. Appearance, discoloured. Complete.

*The Saṃkalpa runs thus*: —

मम अमुककामनासिद्ध्यर्थं सुविद्याप्राप्त्यर्थं श्रीसंकष्टगणपतिप्रीत्यर्थं नारदीय-पुराणोक्तप्रकारेण ध्यानावाहनादि-षोडशोपचारैः पूजनमहं करिष्ये । तदङ्गत्वेन कलशार्चनं च करिष्ये ।

In 3A ends the Saṃkaṣṭagaṇapatipujā. In 3B begins Aṣṭottara-śata-divya-nama-puja of Gaṇeśa which ends in leaf 4B, then 16 offerings to Gaṇesa. It ends with the worship of the moon

## 2894.

750. **सूर्यार्घ्यदानप्रयोगः** । *Sūryārghya-dāna-prayogaḥ.*

*By Vaidyanātha, son of Divākara.*

For the MS. and the work see L. 1582.

It relates to the rite of offering *arghya* to the sun as directed in Tṛcā-Kalpa.

The last but one verse is not correctly quoted in L., and so it is given below. It gives the name of the author's father as Divākara.

> सारोग्यसिद्धै विविक्तोर्पितस्य
> सूर्यार्घ्यदानस्य शुभं प्रयोगम् ।
> दैवाकरिर्मूलवचोनुरूपं
> श्रीवैजनाथो रचयांचकार ॥

The last verse as quoted in L., gives the date of the composition of the work as Śaka 1630.

## 2895.

1985. **सूर्यार्घ्यदानविधिः ।** *Sūryārghya-dāna-vidhiḥ.*

Substance, country-made paper. 6 × 4 inches. Folia, 8. Lines, 8 on a page. Character, Nāgara of the eighteenth century. Complete.

*Colophon* :—

> इति अर्घ्यविधिसंक्षेप समाप्त ।

The writer follows Tṛcākalpa.

*It begins* :—

> अर्घ्यदानविधिः । आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीसविटसूर्यनारायणदेवताप्रीत्यर्थं अभिप्सितकामनासिद्ध्यर्थं तृचाकल्पोक्तविधिना अर्घ्यप्रदानं करिष्ये ॥

*It ends* :—

> गच्छ गच्छ परं स्थानं स्थापनं च दिवाकर ।
> यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥
> नमः सूर्याय शान्ताय सगणायादिहेतवे ।
> निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥

